आनन्दाश्रमसंस्कृतग्रन्थावलिः ।
ग्रन्थाङ्कः ५०

अभ्यंकरोपाह्ववासुदेवशास्त्रिविरचितप्रकाशाख्यव्याख्यासमेता

श्रीनिवासदासविरचिता

# यतीन्द्रमतदीपिका

श्रुत्यादिवर्णानुक्रमादिभिः सनाथीकृता ।

एतत्पुस्तकं
अभ्यंकरोपाह्ववासुदेवशास्त्रिभिः संशोधितम् ।

तच्च
हरि नारायण आपटे
इत्येतैः
पुण्याख्यपत्तने
आनन्दाश्रममुद्रणालये
आयसाक्षरैर्मुद्रयित्वा
प्रकाशितम् ।
शालिवाहनशकाब्दाः १८२७
खिस्ताब्दाः १९०६



मूल्यमाणकचतुष्टयसहितो रूप्यकः । ( रु० १।४ )

## आदर्शपुस्तकोल्लेखपत्रिका ।

---

अथैतस्या यतीन्द्रमतदीपिकायाः पुस्तकानि यैः परहितैकपरतया संस्करणार्थं मद्दत्तानि तेषां नामादीनि पुस्तकानां संज्ञाश्च कृतज्ञतया मदर्श्यन्ते—

'क' इति संज्ञितम्—मूलं संपूर्णमानन्दाश्रमस्थम् ।

'ख' इति संज्ञितम्—मूलं प्रथमपृष्ठरहितं डेक्कनकालेजसंज्ञकपाठशालास्थपुस्तकसंग्रहालयाल्लब्धम् ।

'ग' इति संज्ञितम्—मूलं संपूर्णं तैलङ्गलिप्यां मुद्रितं डा. भाण्डारकर इत्येतेभ्यो लब्धम् ।

'घ' इति संज्ञितम्—मूलं संपूर्णं काश्यां मुद्रितं डा. भाण्डारकर इत्येतेभ्यो लब्धम् ।

एतत्पुस्तक

श्रीमद्गुरुवर्यपरमपूज्यव्याकरणन्यायवेदान्ताद्यनेकशास्त्रालंकृतभारतीकविद्वन्मान्यपरमवैराग्यसंपन्नविद्यादानैकव्रतरामशास्त्रिचरणेषु च्छात्रान्तर्गतेन कृपाभिलाषिणा टीकाकृता परमादरनम्रतापूर्वकं समर्पितम् ॥

# अथ सटीकयतीन्द्रमतदीपिकाया

## विषयानुक्रमः ॥


| | पृ० | पं० |
|---|---|---|
| प्रथमोऽवतारः । | | |
| मङ्गलाचरणम् .... .... | १। | १ |
| पदार्थानामुद्देशः .... .... | २। | ७ |
| प्रमाणलक्षणम् .... .... | ३। | १३ |
| अव्याप्त्यादिस्वरूपम् .... | ४। | २ |
| करणलक्षणम् .... .... | ४। | ६ |
| प्रत्यक्षलक्षणम् .... .... | ४। | १० |
| निर्विकल्पकस्यापि सविशेषविषयत्वम् .... .... | ५। | ४ |
| इन्द्रियाणां संबद्धवस्तुप्रकाशकत्वम् .... .... | ५। | ६ |
| विषयेन्द्रियसंनिकर्षः .... | ६। | १ |
| स्मृतेः प्रत्यक्षेऽन्तर्भावः .... | ७। | ३ |
| संस्कारोद्बोधकारणानि .... | ७। | ६ |
| प्रत्यभिज्ञायाः प्रत्यक्षेऽन्तर्भावः | ८। | १ |
| अनुपलब्धेः प्रत्यक्षेऽन्तर्भावः | ८। | २ |
| ऊहादीनां प्रत्यक्षेऽन्तर्भावः | ८। | ४ |
| सर्वं विज्ञानं यथार्थम् .... | ८। | ६ |
| आत्मख्यातिः .... .... | ९। | ५ |
| तत्खण्डनम् .... .... | ९। | ८ |
| असत्ख्यातिः .... .... | ९। | २७ |
| तत्खण्डनम् .... .... | ९। | २९ |
| अख्यातिः .... .... | १०। | ७ |
| तत्खण्डनम् .... .... | १०। | ९ |
| अन्यथाख्यातिः .... .... | १०। | २१ |
| तत्खण्डनम् .... .... | १०। | २६ |
| अनिर्वचनीयख्यातिः .... | ११। | ४ |
| तत्खण्डनम् .... .... | ११। | १२ |
| सत्ख्यातिनिरूपणम् .... | १२। | १ |
| शुक्तिरजतादिज्ञानस्य सत्यत्वम् .... .... .... | १२। | ३ |
| स्वाप्नज्ञानस्य सत्यत्वम् .... | १२। | ५ |
| पित्तजन्यज्ञानस्य सत्यत्वम् | १२। | ७ |
| औपाधिकज्ञानस्य सत्यत्वम् | १३। | १ |
| मरीचिकाज्ञानस्य सत्यत्वम् | १३। | २ |
| दिग्भ्रमे ज्ञानस्य सत्यत्वम् | १३। | ३ |
| अलातचक्रादिज्ञानस्य सत्यत्वम्.... .... .... | १३। | ४ |
| प्रतिबिम्बज्ञानस्य सत्यत्वम् | १३। | ६ |
| द्विचन्द्रज्ञानस्य सत्यत्वम्.... | १३। | ८ |
| शब्दस्य न प्रत्यक्षजनकत्वम् | १४। | ७ |
| जातिरेव भेदः .... .... | १४। | १७ |
| परोक्तनिर्विकल्पकनिरासः | १६। | १ |
| वेदस्यापौरुषेयत्वम् .... | १६। | १७ |
| ईश्वरानुमानखण्डनम् .... | १७। | १० |
| द्वितीयोऽवतारः । | | |
| अनुमाननिरूपणम् .... | १८। | २ |
| उपाधिनिरूपणम् .... .... | १८। | ११ |
| उपाधेर्द्वैविध्यम् .... .... | १९। | १ |
| पञ्चरूपकथनम् .... .... | १९। | ९ |
| पक्षादिलक्षणम् .... .... | १९। | १० |
| केवलव्यतिरेकिनिरासः .... | १९। | २१ |
| पञ्चावयवाः .... .... | २०। | ५ |
| हेत्वाभासनिरूपणम् .... | २१। | ७ |

| | पृ० प० |
|---|---|
| उपमानस्यानुमानादावन्तर्भावः .... .... .... | २२। ९ |
| अर्थापत्तेरनुमानेऽन्तर्भावः | २३। ६ |
| तर्कनिश्चयवादजल्पवितण्डाछलजातिनिग्रहस्थानलक्षणानि | २३। ६ |
| तृतीयोऽवतारः । | |
| शब्दप्रमाणलक्षणम् .... | २५। ७ |
| वेदस्यप्रामाण्यम् .... .... | २५। ८ |
| ऋगादिभेदाः .... .... | २७।१० |
| यज्ञलक्षणम् .... .... | २७।११ |
| अर्थवादलक्षणम् .... .... | २७।११ |
| विधित्रैविध्यम् .... .... | २८। १ |
| स्मृतेः प्रामाण्यम् .... .... | २९। १ |
| इतिहासपुराणयोः प्रामाण्यम् | २९। ४ |
| पुराणेषु सात्त्विकराजसतामसभेदाः .... .... | २९। ६ |
| पञ्चरात्रस्यप्रामाण्यम् .... | ३०। २ |
| धर्मशास्त्रादीनां प्रामाण्यम् | ३१। २ |
| चतुःषष्टिकलानिरूपणम् .... | ३१। ५ |
| आकाङ्क्षादिनिरूपणम् .... | ३२। ४ |
| योगरूढ्यादिनिरूपणम् ... | ३२। ७ |
| वाक्यस्यसविशेषविषयत्वम् | ३३। १ |
| सर्वशब्दानां नारायणे पर्यवसानम् .... .... .... | ३३। ४ |
| चतुर्थोऽवतारः । | |
| प्रमेयनिरूपणम् .... .... | ३४। ७ |
| नैयायिकोक्तकर्मनिरासः .... | ३४।११ |
| सामान्यनिरासः .... .... | ३५। १ |
| समवायनिरासः .... .... | ३५। २ |
| विशेषनिरासः .... .... | ३५। ३ |
| अभावनिरासः .... .... | ३६। ३ |
| षड्द्रव्याणि .... .... | ३६। ८ |
| प्रकृतिनिरूपणम् .... .... | ३६।१० |
| महत्तत्त्वनिरूपणम् ... .... | ३७। २ |
| अहंकारनिरूपणम् ... .... | ३७। ३ |
| अहंकारभेदाः .... .... | ३७।-४ |
| इन्द्रियलक्षणम् .... .... | ३७। ८ |
| ज्ञानेन्द्रियलक्षणम्.... .... | ३७। ९ |
| मनोनिरूपणम् .... .... | ३७।१० |
| इन्द्रियाणां भौतिकत्वनिरासः .... .... .... | ३८। ४ |
| विषयेन्द्रियसंबन्धः .... | ३८। ५ |
| कर्मेन्द्रियलक्षणम् .... .... | ३८। ७ |
| इन्द्रियाणां जीवेन सह गमनम् .... .... .... | ३९। ६ |
| पञ्च तन्मात्राणि .... .... | ४०। ४ |
| पञ्च भूतानि .... .... | ४०। ७ |
| आकाशलक्षणम् .... .... | ४०। ९ |
| आकाशप्रत्यक्षम् .... .... | ४०।१० |
| आकाशस्य रूपवत्त्वम् .... | ४०।१० |
| आकाशस्य जन्यत्वम् .... | ४०।१० |
| दिङ्निरासः .... .... | ४०।१२ |
| वायुलक्षणम् .... .... | ४१। ३ |
| वायुप्रत्यक्षम् .... .... | ४१।१० |
| तेजोलक्षणम् .... .... | ४२। १ |
| तेजोभेदाः.... .... .... | ४२। ४ |
| अपां लक्षणम् .... .... | ४२।१३ |
| पृथिवीलक्षणम् .... .... | ४२।१८ |
| तमसः पृथिवीत्वम् .... | ४३। २ |
| पञ्चीकरणम् .... .... | ४३। ६ |
| सप्तीकरणम् .... .... | ४४। ४ |
| शरीरलक्षणम् .... .... | ४४। ७ |
| परोक्तशरीरलक्षणनिरासः | ४५। २ |

| | पृ० प० |
|---|---|
| शरीरभेदाः .... .... | ४६। १ |
| परोक्ततत्त्वनिरासः .... | ४७। ३ |
| परमाणुकारणत्वनिरासः.... | ४७। ४ |
| ब्रह्माण्डसंनिवेशः.... .... | ४७। ७ |
| पञ्चमोऽवतारः। | |
| काललक्षणम् .... .... | ४९।११ |
| कालस्य नित्यत्वं विभुत्वं च | ४९।१२ |
| युगपरिमाणम् .... .... | ५०। ३ |
| षष्ठोऽवतारः। | |
| नित्यविभूतिनिरूपणम् .... | ५१। ७ |
| शुद्धसत्त्वस्याजडत्वम् .... | ५१। ८ |
| शुद्धसत्त्वस्य नित्यत्वम् .... | ५२। ६ |
| ईश्वरादिशरीराणि .... | ५३। ७ |
| सप्तमोऽवतारः। | |
| धर्मभूतज्ञाननिरूपणम् .... | ५६। २ |
| ज्ञानस्य नित्यत्वम् .... | ५६। ४ |
| ज्ञानस्य स्वतःप्रामाण्यम् .... | ५७। १ |
| ज्ञानस्य परोक्तक्षणिकत्वादिनिरासः .... .... | ५७। ४ |
| ज्ञानस्य गुणत्वं द्रव्यत्वं च | ५८। ३ |
| ज्ञानस्यैव सुखादिरूपत्वम् | ५९। २ |
| बहूनां जीवगुणानां ज्ञानावस्थाविशेषत्वम् .... | ५९। ८ |
| ज्ञानशक्त्यादिलक्षणम् .... | ६०। ७ |
| भक्तिप्रपत्त्योः स्वरूपम् .... | ६१। ७ |
| कर्माङ्गकज्ञानस्य मोक्षोपायत्वम् .... .... .... | ६१।१६ |
| कर्मयोगनिरूपणम् .... | ६२। १ |
| ज्ञानयोगनिरूपणम् .... | ६२। ५ |
| भक्तियोगनिरूपणम् .... | ६२। ८ |
| यमनियमादिनिरूपणम् .... | ६२।१२ |

| | पृ० प० |
|---|---|
| विवेकादिसाधनसप्तकम् .... | ६३। १ |
| साधनभक्तिफलभक्तिनिरूपणम् .... .... .... | ६३। ९ |
| वेदान्तेषु ध्यानस्यैव विधानम् | ६४। १ |
| परोक्तमोक्षोपायनिरासः .... | ६५। १ |
| सप्त भङ्गाः.... .... .... | ६५।१६ |
| अष्टमोऽवतारः। | |
| जीवेश्वरसामान्यलक्षणम् | ६७। २ |
| जीवलक्षणम् .... .... | ६७। ५ |
| जीवस्य देहादिभ्यो भिन्नत्वम् | ६७। ८ |
| जीवस्याणुत्वम् .... .... | ६९। ३ |
| जीवस्य नित्यत्वम् .... | ७०। २ |
| जीवभेदाः .... .... | ७१। १ |
| जीवस्य कर्तृत्वभोक्तृत्वादि | ७२। ३ |
| मकाराद्वैतम् .... .... | ७२। ५ |
| मकारार्थद्वैतम् .... .... | ७२।१५ |
| जीवविषये बौद्धादिमतनिरासः .... .... .... | ७३। ३ |
| बद्धमुक्तादिभेदाः .... | ७५। ७ |
| भक्तद्वैविध्यम् .... .... | ७७। २ |
| प्रपन्नलक्षणम् .... .... | ७७। ५ |
| प्रपन्नभेदाः .... .... | ७७।१२ |
| मुक्तस्वरूपम् .... .... | ७७।१८ |
| मुक्तस्य ब्रह्मसाम्यम् .... | ७८।१२ |
| नित्यजीवलक्षणम् .... | ७८।१७ |
| नवमोऽवतारः। | |
| ईश्वरलक्षणम् .... .... | ७९। ७ |
| ईश्वरस्य जगदुपादानत्वादि | ७९। ९ |
| उपादानादिलक्षणानि .... | ८१। १ |
| नारायणे कारणत्वपर्यवसानम् | ८१। ९ |

| | पृ० पं० | | पृ० पं० |
|---|---|---|---|
| मायावादिमतनिरासः .... | ८२।१३ | तमोगुणलक्षणम् .... | ९१। ४ |
| ईश्वरस्य विभुत्वम् .... | ८३। ८ | शब्दलक्षणम् .... | ९१।११ |
| परव्यूहादिभेदाः .... | ८३।१९ | स्पर्शलक्षणम् .... | ९३। १ |
| परलक्षणम् .... | ८३।२० | रूपलक्षणम् .... | ९३। ६ |
| व्यूहलक्षणम् .... | ८४। ७ | रसलक्षणम् .... | ९४। ४ |
| विभवलक्षणम् .... | ८६। ७ | गन्धलक्षणम् .... | ९४। ९ |
| अन्तर्यामिलक्षणम् .... | ८८। २ | संयोगलक्षणम् .... | ९५। १ |
| अर्चावतारलक्षणम् .... | ८८। ५ | विभागखण्डनम् .... | ९६। १ |
| दशमोऽवतारः । | | शक्तिलक्षणम् .... | ९७। १ |
| अद्रव्यनिरूपणम् .... | ९०। १ | इतरगुणानामन्तर्भावः, .... | ९७। ८ |
| सत्त्वलक्षणम् .... | ९०। ३ | तत्तद्गुणाश्रयोक्तिः, .... | १००।२ |
| रजोगुणलक्षणम् .... | ९१। ३ | तत्त्वैक्यादिनिरूपणम् .... | १०१।११ |


समाप्तेयं विषयानुक्रमणिका ।

श्रीः

ॐ तत्सद्ब्रह्मणे नमः ।

# अथ यतीन्द्रमतदीपिका

## प्रकाशसहिता ।

श्रीवेङ्कटेशं करिशैलनाथं श्रीदेवराजं घटिकाद्रिसिंहम् ।
कृष्णेन साकं यतिराजमीडे स्वप्नेऽप्य दृष्टान्मम देशिकेन्द्रान् ॥ १ ॥
यतीश्वरं प्रणम्याहं वेदान्तार्यं महागुरुम् ।
करोमि बालबोधार्थं यतीन्द्रमतदीपिकाम् ॥ २ ॥

---

यतीन्द्रमतदीपिका प्रकाशः ।

प्रणम्य परमात्मानं विश्वेशं सर्वसाक्षिणम् ।
संयुनज्मि प्रकाशेन यतीन्द्रमतदीपिकाम् ॥ १ ॥
दीपिकाऽपि विषयान्न बोधयेन्मन्दबुद्धितिमिरावगुण्ठितान् ।
तद्भ्रमापसरणाय कृतोऽयं यत्न एष तिमिरं विनाशयेत् ॥ २ ॥
न तीक्ष्णधिषणो न च प्रथितगूढशास्त्रार्थवित्
तथाऽपि मुहुरुत्सुको गुरुकृपावलम्बी परम् ॥
अशेषजगदाश्रयं परमपूरुषं चिन्तयन्
यतीन्द्रमतदीपिकां विवृणुयामिति प्रार्थये ॥ ३ ॥
मत्कृतिरियमिति नार्हति संग्रहमेषेति पण्डितैर्मान्यैः ।
न स्वान्ते करणीयं नात्रापूर्वं विलिख्यते किंचित् ॥ ४ ॥
श्रीभाष्यादिनिबन्धान्दृष्ट्वा प्रायस्तदीयसिद्धान्तान् ।
तत्तत्प्रसङ्गवशतो विशदीकर्तुं यथामति प्रयते ॥ ५ ॥
तत्रापि यदि भवेयुर्दोषाश्चेतोवधानवैधुर्यात् ।
आलस्यौदासीन्यं स्वी कुर्वन्तु प्रकाशममुमार्याः ॥ ६ ॥

ग्रन्थारम्भे कृतं मङ्गलं शिष्यशिक्षार्थं निबध्नाति—श्रीवेङ्कटेशमिति ।

---

श्रीमन्नारायण एव चिदचिद्विशिष्टाद्वैततत्त्वं भक्तिप्रपत्तिभ्यां प्रसन्नः स एवोपायोऽप्राकृतदेशविशिष्टः स एव प्राप्य इति वेदान्तवाक्यैः प्रतिपादयतां व्यासबोधायनगुहदेवभारुचिब्रह्मानन्दिद्राविडाचार्यश्रीपराङ्कुशनाथयामुनमुनियतीश्वरप्रभृतीनां मतानुसारेण बालबोधार्थं वेदान्तानुसारिणी यतिपतिमतदीपिकाख्या शारीरकपरिभाषा महाचार्यकृपावलम्बिना मया यथामति संग्रहेण प्रकाश्यते ।

सर्वं पदार्थजातं प्रमाणप्रमेयभेदेन[1] द्विधा भिन्नम् । प्रमाणानि त्रीण्येव । प्रमेयं द्विविधम् । द्रव्याद्रव्यभेदात् । द्रव्यं द्विविधम् । जडमजडमिति । जडं च द्विधा । प्रकृतिः कालश्चेति । प्रकृतिश्चतुर्विंशतितत्त्वात्मिका । कालस्तूपाधिभेदात्त्रिविधः ।

---

अप्राकृतेति । अप्राकृतदेशश्च वैकुण्ठलोकः । प्रकाश्यत इति ।

दशावतारा ग्रन्थेऽस्मिन्ग्रन्थकारेण निर्मिताः ।
प्रमाणत्रितयद्रव्यषट्काद्रव्यविभागतः ॥ १ ॥
प्रमाणं प्रथमे प्रोक्तं प्रत्यक्षं स्मरणं तथा ।
द्वितीयेऽनुमितिर्व्याप्तिर्हेत्वाभासा निरूपिताः ॥ २ ॥
तृतीये प्रमितिः शाब्दी चतुर्थे द्रव्यलक्षणम् ।
चतुर्विंशतितत्त्वानामुत्पत्तिश्चैव वर्णिता ॥ ३ ॥
पञ्चमे लक्षितः कालस्तद्भेदा अप्युपाधितः ।
नित्या विभूतिः षष्ठे तु सप्तमे बुद्धिलक्षणम् ॥ ४ ॥
अष्टमे वर्णितं जीवस्वरूपं तद्गुणा अपि ।
अवतारे तु नवमे परमात्मनिरूपणम् ॥ ५ ॥
अद्रव्यं दशधा प्रोक्तमवतारे तथाऽन्तिमे ।
एवं दशावतारेषु पदार्था वर्णिताः क्रमात् ॥ ६ ॥

त्रीण्येवेति । प्रत्यक्षानुमानशब्दरूपाणि त्रीण्येवेत्यर्थः । इतरेषामेष्वेवान्तर्भावं वक्ष्यति । चतुर्विंशतितत्त्वेति । प्रकृतिमहदहङ्कारमनःश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थशब्दतन्मात्रस्पर्शतन्मात्ररूपतन्मात्ररसतन्मात्रगन्धतन्मात्राकाशवायुतेजोऽप्पृथिवीरूपाणि चतुर्विंशतितत्त्वानि । उपाधिभेदात् । वर्तमानभूतभविष्यद्रूपोपाधिभेदात् ।

---

1 प. °भेदाभ्याम्° ।

अजडं तु द्विविधम् । पराक्प्रत्यगिति। अजडं परागपि तथा । नित्यविभूतिर्धर्मभूतज्ञानं चेति । प्रत्यगपि द्विविधः । जीवेश्वरभेदात् । जीवस्त्रिविधः । बद्धमुक्तनित्यभेदात् । बद्धो द्विविधः । बुभुक्षुमुमुक्षुभेदात् । बुभुक्षुर्द्विविधः । अर्थकामपरो धर्मपरश्चेति । धर्मपरो द्विविधः । देवतान्तरपरो भगवत्परश्चेति । मुमुक्षुर्द्विविधः । कैवल्यपरो मोक्षपरश्चेति । मोक्षपरो द्विविधः। भक्तः प्रपन्नश्चेति। प्रपन्नो द्विविधः । एकान्ती परमैकान्ती चेति। परमैकान्ती द्विविधः । दृप्तार्तभेदात् ।पञ्चधाऽवस्थित ईश्वरः । परव्यूहविभवान्तर्याम्यर्चावतारभेदात् ।पर एकधा । व्यूहश्चतुर्धा । वासुदेवसंकर्षणप्रद्युम्नानिरुद्धभेदात् । केशवादि व्यूहान्तरम् । मत्स्यादयो विभवाः पुनरनन्ताश्च । अन्तर्यामी प्रतिशरीरमवस्थितः । अर्चावतारस्तु श्रीरङ्गवेङ्कटाद्रिहस्तिगिरियादवाद्रिघटिकाचलादिषु सकलमनुजनयनविषयतां गतो मूर्तिविशेषः । अद्रव्यं तु सत्त्वरजस्तमःशब्दस्पर्शरूपरसगन्धसंयोगशक्तिभेदाद्दशैव ।

एवमुपदिष्टानामुद्देशक्रमेण लक्षणपरीक्षे क्रियेते । तत्र प्रमाकरणं प्रमाणम् । प्रमाणं लक्ष्यम्। प्रमाकरणत्वं लक्षणम् । यथावस्थितव्यवहारानुगुणज्ञानं प्रमा। प्रमा लक्ष्यम् । यथावस्थितव्यवहारानुगुणज्ञानत्वं लक्षणम् । ज्ञानं प्रमेत्युक्ते शुक्तिकायामिदं रजतमिति ज्ञानेऽतिव्याप्तिरत उक्तं व्यवहारानुगुणमिति । एवमपि तत्रैवातिव्याप्तिर्भ्रान्तिदशायामपीदं रजतमिति व्यवह्रियमाणत्वात् । अत उक्तं यथावस्थितमिति । यथावस्थितपदेन संशयान्यथाज्ञानविपरीतज्ञानव्यावृत्तिः। धर्मिग्रहणे मिथोविरुद्धानेकविशेषस्मरणं संशयः।यथोर्ध्वताविशिष्टे स्थाणुर्वा पुरुषो वेति ज्ञानम् । अन्यथाज्ञानं नाम धर्मविपर्यासः । यथा कर्तृत्वेन भासमान आत्मनि कुयुक्तिभिः कर्तृत्वस्य भ्रान्तत्वोपपादनम् । विपरी-

---

तथा द्विविधम् ।

उद्देशक्रमेणेति । नाम्ना पदार्थसंकीर्तनमुद्देशः । लक्षणेति । अव्याप्त्यतिव्याप्त्यसंभवरूपदोषत्रयरहितधर्मवचनं लक्षणम् । यथालक्षितस्यैतल्लक्षणमुपपद्यते न वेति विचारः परीक्षा। यथावस्थितेति। अवस्थितं वस्त्वनतिक्रम्य यो व्यवहार 'इदममुकं वस्तु ' इत्यादिस्तदनुगुणं तदुपयोगि ज्ञानमित्यर्थः। यथावस्थितेति ज्ञानविशेषणं वा । धर्मविपर्यास इति । पीतः शङ्ख इतिवत् । कर्तृत्वेन भासमान इति । स्वर्गापवर्गसाधनानुष्ठानविधानशास्त्राणामर्थवत्त्वाय कर्ताऽऽत्मेति मन्तव्यम्। प्रकृतेः कर्तृत्वे मोक्षसाधनभूतसमाध्यभावश्च स्यात् । प्रकृतेरन्योऽस्मीति समाधौ प्रकृतेः कर्तृत्वायोगात्।

---

१ ग. °नन्ताः । अ° । २ ग. °रद्दादिषु । ३ घ. °गुणं ज्ञा° । ४ ख. घ. °स्थितेतिप° । ५ क. ख. ग. °विशेषे स्था° ।

तज्ज्ञानं नाम धर्मिविपर्यासः। यथा वस्तुनो वस्त्वन्तरज्ञानम्। लक्षणस्य त्रीणि दूषणानि सन्ति। अव्याप्त्यतिव्याप्त्यसंभवभेदात्। लक्ष्यैकदेशे लक्षणस्यावर्तनमव्याप्तिः। कपिलवर्णवत्त्वं गोर्लक्षणमिति लक्षणे कृते शुक्लायामव्याप्तिः। लक्ष्यादन्यत्र वर्तमानत्वमतिव्याप्तिः। लक्ष्ये क्वाप्यविद्यमानत्वमसंभवः। यथा चक्षुर्विषयो जीव इत्युक्तेऽसंभव एव। अत्रोक्तदूषणत्रयाभावात्प्रमालक्षणं स्वस्थम्। साधकतमं करणम्। अतिशयितं साधकं साधकतमम्। यस्मिन्सत्यविलम्बेन ज्ञानमुत्पद्यते तदतिशयितमित्युच्यते। तेन प्रमाकरणं प्रमाणमिति सिद्धम्। अनधिगतार्थगन्तृ प्रमाणमित्यादिकं तु तत्तद्वादिभिरेव निरस्तत्वादनादरणीयम्।

तानि प्रमाणानि प्रत्यक्षानुमानशब्दाख्यानि त्रीण्येव। अत्र साक्षात्कारि-

---

तच्च कर्तृत्वं नैमित्तिकमिति गीताभाष्य उक्तम्। तथा च भाष्यम्—'आत्मनः स्वतः परिशुद्धस्वभावस्य पूर्वपूर्वकर्ममूलसङ्गनिमित्तं विविधकर्मसु कर्तृत्वम्' (गी० १४।१९) इति। धर्मिविपर्यास इति। यथा शुक्ताविदं रजतमित्यत्र। अतिव्याप्तिरिति। यथा शृङ्गित्वं गोर्लक्षणमिति लक्षणे कृते महिष्यादावतिव्याप्तिः। अत्र च लक्ष्ये विद्यमानत्वे सतीत्यपि बोध्यम्। अन्यथाऽसंभवेन संकरः स्यात्। तत्रापि लक्ष्यादन्यत्र लक्षणस्य विद्यमानत्वात्। निरस्तत्वादिति। मायावादिनामिदं लक्षणम्। 'अनधिगतार्थगन्तृ' इत्यनेन स्मृतेर्निरासः। तस्या अधिगतार्थगन्तृत्वात्। एतच्च लक्षणं नैयायिकैः खण्डितम्। धारावाहिकबुद्धिस्थले द्वितीयादिज्ञानानामनधिगतार्थगन्तृत्वाभावेन तल्लक्षणस्याव्याप्तिग्रस्तत्वात्। न चेदानीं घट इत्यादिप्रतीत्या नीरूपस्यापि कालस्य षडिन्द्रियवेद्यत्वाभ्युपगमेन द्वितीयादिज्ञानानां पूर्वपूर्वज्ञानाविषयतत्तत्क्षणविशेषविषयत्वेन न तत्राव्याप्तिरिति वाच्यम्। इदानीं घट इत्यादौ घटादेरेवेन्द्रियवेद्यत्वात्। कालस्य तत्त्वाभ्युपगमे तु 'आकाशे बलाकाः' इत्यादिप्रतीत्याऽऽकाशस्यापि चाक्षुषप्रत्यक्षविषयतापत्तेः। न चेष्टापत्तिः। मायावादिमते आकाशस्याचाक्षुषत्वात्। रामानुजमते धारावाहिकज्ञानस्यैकत्वमाकाशस्य प्रत्यक्षविषयत्वं चास्तीत्यन्यदेतत्।

साक्षात्कारिप्रमेति। साक्षात्कारिणी या प्रमेत्यर्थः। अत्र केचित्—इन्द्रियजन्या प्रमा साक्षात्कारिणीत्युच्यते। एतेन प्रत्यक्षज्ञाने जाते साक्षात्त्वज्ञाने जाते च तस्मिन्प्रत्यक्षप्रमाणज्ञानमित्यन्योन्याश्रय इत्यपास्तम्। इन्द्रियत्वेन तज्जन्यत्वस्य विवक्षितत्वान्मनोजन्येऽनुमित्यादौ नातिव्याप्तिः शङ्कनीयेति वदन्ति। तच्चिन्त्यम्। मुक्तनित्येश्वर-

---

१ घ. नत्वम्°। २ घ. °षा चाक्षुषो जी°। ३ क. ग. °माणल°। ४ क. ग. त्रीणि। ५ घ °त्कारप्र°।

प्रमाकरणं प्रत्यक्षम् । अनुमानादिव्यावृत्त्यर्थं साक्षात्कारीति । दुष्टेन्द्रियजव्यावृत्त्यर्थं प्रमेति । तच्च प्रत्यक्षं द्विविधम् । निर्विकल्पकसविकल्पकभेदात् । निर्विकल्पकं नाम गुणसंस्थानादिविशिष्टप्रथमपिण्डग्रहणम् । सविकल्पकं तु समत्वपरामर्शे गुणसंस्थानादिविशिष्टद्वितीयादिपिण्डज्ञानम् । उभयविधमप्येतद्विशिष्टविषयमेव । अविशिष्टग्राहिणो ज्ञानस्यानुपलम्भादनुपपत्तेश्च । ग्रहणप्रकारस्तु आत्मा मनसा संयुज्यते मन इन्द्रियेणेन्द्रियमर्थेन । इन्द्रियाणां प्राप्यप्रकाशकारित्वनियमात् । अतो घटादिरूपार्थस्य चक्षूरूपेन्द्रियस्य च संनिकर्षे सत्यर्थं

---

ज्ञानेऽव्याप्तेः । तस्येन्द्रियनिरपेक्षत्वात् । साक्षात्त्वलक्षणं तु लैङ्गिकत्वशाब्दत्वस्मृतित्वरहितं ज्ञानत्वमिति बोध्यम् । न च वैशद्यमात्रं साक्षात्त्वमिति वाच्यम् । सुषुप्त्यादावविशदात्मस्वरूपस्य भानात् । प्रकाशांशवैशद्यस्य परोक्षज्ञानेऽपि सत्त्वाच्च । दुष्टेन्द्रियेति । दुष्टेन्द्रियजन्येऽन्यथाज्ञानादौ यथावस्थितव्यवहारानुगुणज्ञानत्वरूपप्रमालक्षणस्याभावात्तेषां प्रमाकरणत्वाभावान्न प्रमाणत्वमिति बोध्यम् । निर्विकल्पकं नामेति । केचित्तु जातिगुणद्रव्यादीनामन्योन्यसंबन्धं विना पृथक्पृथगुपलम्भो निर्विकल्पकप्रत्यक्षम् । विशिष्टप्रत्यक्षे विशेषणज्ञानस्य कारणत्वात् । दण्डी देवदत्त इतिवदित्याहुः । तन्न । दण्डदेवदत्तयोः पृथग्ग्रहणस्य विशेषणविशेष्यभावप्रयुक्तत्वाभावात् । दण्डदेवदत्तयोः संबन्धात्पूर्वं यत्तयोः पृथग्ग्रहणं तत्तयोः संबन्धाभावादेव । संबन्धोत्तरं तु पृथग्ग्रहणमेव नास्ति । तदानीं विशेषणविशेष्यभावेनैव तयोः प्रतीतत्वात् । जातिव्यक्त्योस्तु नियमेन संबन्धादेकसामग्रीवेद्यत्वाच्च तयोः पृथग्ग्रहणं नैव संभवति । तस्मान्निर्विकल्पकेऽपि ससंस्थानमेव वस्त्वित्थमिति प्रतीयते । द्वितीयादिप्रत्ययेषु तस्यैव संस्थानविशेषस्यानेकवस्तुनिष्ठतामात्रं प्रतीयते । संस्थानरूपप्रकाराख्यस्य पदार्थस्यानेकवस्तुनिष्ठतयाऽनेकवस्तुविशेषणत्वं द्वितीयादिप्रत्ययावगम्यमिति द्वितीयादिप्रत्ययाः सविकल्पका इत्युच्यन्ते । यद्यपि प्रथमपिण्डग्रहणेऽनुवृत्तिर्न प्रतीयते तथाऽपि जातिः प्रतीयत एव । नह्यनुवृत्तिर्जातिरपि त्वनुवृत्तं संस्थानमेवेति वेदार्थसंग्रहे स्पष्टम् । ननु प्रथमपिण्डग्रहणजन्यसंस्कारनाशोत्तरं जायमानस्य द्वितीयपिण्डग्रहणस्य निर्विकल्पकत्वं स्यात् । तदानीमनुवृत्तेरग्रहणादिति चेदिष्टमेव । द्वितीयादित्वेन यद्द्वितीयादिपिण्डग्रहणं तदेव सविकल्पकमित्यर्थस्य विवक्षितत्वात् । इन्द्रियाणामिति । तत्र त्वगिन्द्रियं रसनेन्द्रियं च स्वसंबद्धवस्तुप्रकाशकमित्यनुभवादेव सिद्धम् । दूरस्थगन्धोऽपि वायुवशात्समीपगत एव घ्राणेन्द्रियेण गृह्यत इति तदपि प्राप्यप्रकाशकमेव । चक्षुःश्रोत्रविषये त्वनुमानमुच्यते। चक्षुरिन्द्रियं श्रोत्रेन्द्रियं च प्राप्यप्रकाशकारि, इन्द्रियत्वा-

---

१ क. 'शिष्ट प्र°। २ ख. तु गु। ३ घ. 'णां वस्तुप्राप्यकारि। ४ ग. °प्यकारि°। ५ क. ख. घ. चक्षुरादिरू ।

घटः पट इति चाक्षुषज्ञानं जायते। एवमेव स्पार्शनप्रत्यक्षादयोऽपि। द्रव्यग्रहणे संयोगः संबन्धः। द्रव्यगतरूपादिग्रहणे समवायानङ्गीकारात्संयुक्ताश्रयणं संबन्धः। निर्विकल्पकसविकल्पकभिन्नं प्रत्यक्षं द्विविधम्। अर्वाचीनमनर्वाचीनं चेति। अर्वाचीनं पुनर्द्विविधम्। इन्द्रियसापेक्षं तदनपेक्षं चेति। तदनपेक्षं च द्विविधम्। स्वयंसिद्धं दिव्यं चेति। स्वयंसिद्धं योगजन्यम्। दिव्यं भगवत्प्रसादजन्यम्। अनर्वाचीनं त्विन्द्रियनिरपेक्षं मुक्तनित्येश्वरज्ञानम्। अनर्वाचीनं तु प्रसङ्गादुक्तम्। एवं साक्षात्कारिप्रमाकरणं प्रत्यक्षमिति सिद्धम्।

---

त्वगादीन्द्रियवत्। दूरस्थघटादिभिश्चक्षुष सबन्धस्तु वृत्तिद्वारा बोध्यः। इन्द्रियाणां योग्यदेशे वृत्तिप्रसरणात्। स्यादेतत्। उन्मिषितमात्र चक्षुश्चन्द्रं बोधयति। न चैकस्मिन्क्षणे तावान्देशो वृत्त्या लङ्घयितु क्षमः। क्रमे तु प्रतिपरमाण्ववच्छेदं विलम्ब्य गमनात्प्रतीतिरपि विलम्बेत। दूरासन्नग्रहणकालतारतम्यं च स्यात्। वृत्तिप्रसरणाभावे तु प्राप्यप्रकाशकारित्व न सिध्यति। मैवम्। सूर्योदये सकलदिग्व्यापिन्याः प्रभाया इवेन्द्रियवृत्तेरपि तादृशवेगातिशयाङ्गीकारेणादोषात्। तत्र सतोऽपि क्रमस्य दुर्लक्ष्यतया पद्मपत्रशतवेधरीत्या यौगपद्याभिमानात्। ता च वृत्तिमालोकाद्यनुप्रवेशानुगुणसंनिवेशवानम्बुकाचादिः स्वभावादेव न सर्वथा प्रतिबध्नातीति तद्व्यवहितस्य यथायथमविशद प्रत्यक्ष भवत्येव। वस्तुस्वभाववैचित्र्य चावश्यं त्वयाऽप्यभ्युपेयम्। अन्यथा ह्यप्राप्यग्रहणेऽपि कुड्यादिव्यवहित न ग्राह्य काचादिव्यवहित तु ग्राह्यमित्यत्र नियामकाभावः। अञ्जनादिसंस्कृतनयनप्रभायाः पृथिव्यादावनुप्रवेशात्तद्रक्तचक्षुषा निधिप्रभृतेरुपलम्भः। अथ श्रोत्रेन्द्रियस्य दूरस्थशब्देन कथं संबन्धः। सांख्यास्तु चक्षुरिन्द्रियस्येव श्रोत्रेन्द्रियस्यापि वृत्तिद्वारैव संबन्धः। न तु वायुवशादुपसन्नस्य शब्दस्येन्द्रियदेश एव संबन्धः। अत एव भेरीशब्दो मया श्रुत इति अमुकदिशि शब्दो जात इति च धीः संगच्छत इत्याहुः। तन्न। तथा सति दूरस्थो भेरीशब्दं विलम्बेन शृणोति वादकास्तदासन्नाश्चाविलम्बेनेति वैषम्य निर्बीजं स्यात्। तस्माद्वायुवशात्समीपमागच्छन्नेव शब्दो गृह्यत इत्यभ्युपेयम्। एवमपि भेरीशब्दो मया श्रुत इति धीरुपपद्यते। अमुकदिशि शब्दो जात इति त्वनुमानेनापि गम्यत इति बोध्यम्। द्रव्यग्रहण इति। त्वक्चक्षुर्मनांसि द्रव्याद्रव्यग्राहकाणि। श्रोत्रजिह्वाघ्राणान्यद्रव्यग्राहकाणि। संयोग इति। तदुक्तं तत्त्वरत्नाकरे—

'तत्र वृद्धा विदामासुः संयोग संनिकर्षणम्।
संयुक्ताश्रयणं चेति यथासंभवमूह्यताम्' इति।

---

१ ख. 'ति शा°। २ क ख. घ. °पणव°।

ननु यथावस्थितव्यवहारानुगुणज्ञानं प्रमेत्युक्तम्। एवं च स्मृतेरपि यथावस्थितव्यवहारानुगुणत्वेन प्रामाण्यात्स्मृतेरपि प्रमाणत्वेन परिगणनाच्च त्रीण्येव प्रमाणानीति कथं प्रतिपाद्यत इति चेदुच्यते—स्मृतेः प्रामाण्याङ्गीकारेऽपि संस्कारसापेक्षत्वात्तस्याः प्रत्यक्षमूलभूतत्वान्मूलभूते प्रत्यक्षेऽन्तर्भाव इति न पृथक्प्रमाणकल्पनम्। अतस्त्रीण्येवे प्रमाणानि संभवन्ति। स्मृतिर्नाम पूर्वानुभवजन्यसंस्कारमात्रजन्यं ज्ञानम्। तत्र चोद्बुद्धः संस्कारो हेतुः। तदुद्बोधश्च

'सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः'

इत्युक्तप्रकारेण क्वचित्सदृशदर्शनाद्भवति क्वचिददृष्टात्क्वचिच्चिन्तया। आदिशब्देन साहचर्यस्यापि ग्रहणात्तेनापि भवति सादृश्यजा यथा—देवदत्तयज्ञदत्तयोः सदृशयोर्देवदत्तदर्शनेन यज्ञदत्तस्मृतिः। द्वितीया यथा—यादृच्छिकी कालान्तरानुभूतश्रीरङ्गादिदिव्यदेशस्मृतिः। तृतीया यथा—चिन्त्यमाने सति श्रीवेङ्कटेशस्य कमनीयदिव्यमङ्गलविग्रहस्मृतिः। चतुर्थी तु सहचरितयोर्देवदत्तयज्ञदत्तयोर्मध्येऽन्यतरदर्शनेन तदन्यतरस्मृतिः। सम्यक्पूर्वमनुभूतस्य सर्वस्य स्मृतिविषयत्वनियमः। क्वचित्कालदैर्घ्याद्व्याध्यादिना वा संस्कारप्रमोषात्स्मृत्यभावः।

---

स्मृतेरिति। सदृशादृष्टचिन्ताद्यैः संस्कारानुग्रहे ततः संस्कारोद्बोधे या परिणमति मतिः सा स्मृतिः। सा च स्वकारणभूतप्रमितिभ्रान्तिसंशयानुरोधेन स्वयमपि तादृग्रूपा सती त्रिप्रकारेति सर्वार्थसिद्धावुक्तम्। केचित्तु सर्वाऽपि स्मृतिरयथार्थैवार्थशून्यत्वात्। नहि पाकरक्ते घटे श्यामतामतिर्यथार्था। तद्वन्निवृत्तपूर्वावस्थे वस्तुनि तत्तामुल्लिखन्ती स्मृतिरयथार्थैवेत्याहुः। तन्न। स्मर्तव्यस्यापि विषयस्य स्वकाले विद्यमानत्वात्। नहि स्मृतिर्निवृत्तामपि पूर्वावस्थां वर्तमानत्वेनोल्लिखति। तथाचेदिदमित्येवोल्लिखेत्। अपि तु निवृत्तत्वेनैव। अन्यथा तत्तोल्लेखाभावप्रसङ्गात्। पाकरक्ते तु श्यामताप्रत्ययो निवृत्तमपि श्यामत्वं वर्तमानत्वेनोल्लिखतीति विषमो दृष्टान्तः। एवमेवातीतानागतानुमानागमयोगिप्रत्यक्षेषु नष्टविषयत्वेऽपि याथार्थ्यं द्रष्टव्यम्। नन्वेवं स्मृतेर्यथार्थत्वेऽपि प्रमाणत्वं कुतः। कणादेन तेष्वपरिगणनादिति चेदत्र सर्वार्थसिद्धिकाराः—न ह्यक्षपादः कणादः कपिल इत्यादयः प्रामाणिकत्वेन परिग्राह्याः। युक्तियुक्तं तु गृह्णीमः। न पुनस्तद्वाक्यगौरवादिति। तथाच तैरनुक्तमपि युक्तियुक्तं चेद्ग्राह्यमेव। तैरुक्तमपि युक्तिविरुद्धं चेत्त्याज्यमेव। दृश्यते च स्मृतेः प्रमाणत्वेन परिगणनम्—

'स्मृतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम्' इत्यादौ।

---

१ ग. 'ज्ञानत्वं'। २ ग. घ. 'ण्येवेति संभवति। स्मृ'। ३ घ. 'स्य स्मृ°'।

यथा स्मृतेः प्रत्यक्षेऽन्तर्भावस्तथा सोऽयं देवदत्त इति प्रत्यभिज्ञाया अपि प्रत्यक्षेऽन्तर्भावः । अस्मन्मतेऽभावस्य भावान्तररूपत्वात्तज्ज्ञानस्यापि प्रत्यक्षेऽन्तर्भावः । भूतले घटात्यन्ताभावो भूतलमेव । घटप्रागभावो नाम मृदेव । घटध्वंसश्च कपालमेव । प्रायः पुरुषेणानेन भवितव्यमेतदूहः । पुरः किंसंज्ञकोऽयं वृक्ष इत्यनध्यवसायो ज्ञानं संशय उक्तः । एतयोरपि प्रत्यक्षेऽन्तर्भावः । पुण्यपुरुषनिष्ठा प्रतिभाऽपि प्रत्यक्षेऽन्तर्भूता । सर्वं विज्ञानं यथार्थमिति वेदान्तविदां मतमित्युक्तत्वात् । भ्रमादिप्रत्यक्षज्ञानं यथार्थमेव । अख्यात्यात्म

अथानुपलब्धिप्रमाणस्य प्रत्यक्षेऽन्तर्भावमाह—अस्मन्मत इति । अन्तर्भाव इति । तथा च प्रयोगः—अभावज्ञानमिन्द्रियजन्यमिन्द्रियान्वयव्यतिरेकानुविधायित्वाद्घटादिज्ञानवदिति । ननु गजाभाववति क्वचित्प्रदेशे विद्यमानमपि गजाभावं कारणाभावादननुभूयान्यत्र गतश्चैत्रो मैत्रेण 'तस्मिन्प्रदेशे गजो दृष्टः किम्' इति पृष्टः संस्तत्प्रदेशे गजाभावं निश्चिनोतीति तदर्थमनुपलब्धिप्रमाणमङ्गीकार्यमेव । नह्यत्र प्रत्यक्षं क्रमते । तत्प्रदेशस्येदानीमिन्द्रियासन्निकर्षादिति चेत्सत्यम् । तत्प्रदेशे गजाभावः स्मर्तव्यस्य स्मरणाभावादनुमीयते । तथा च प्रयोगः· विप्रतिपन्नः प्रदेशो गजवत्तया मयाऽननुभूतः, स्मर्तव्यत्वे सति तद्वत्तयेदानीमस्मर्यमाणत्वादिति । तथाच स्मरणाभावादनुभवाभावः । अनुभवाभावाच्च विषयाभाव इति तत्सिद्ध्यर्थं न प्रमाणान्तरापेक्षेति भावः । एतयोरपीति । ननु संशयस्यायथार्थज्ञानत्वेन कणादेन प्रतिपादनात्कथं प्रामाण्यमिति चेन्न । स्थाणुर्वा पुरुषो वेत्यत्र पुरोवर्तिवस्तुज्ञानं स्थाणुत्वपुरुषत्वविषयकं ज्ञानं चैकमेवेति वक्तुं न शक्यते । पुरोवर्तिवस्तुनः स्थाणुत्वविशिष्टतया भाने पुरुषत्वविशिष्टतया भानासंभवात् । एवं पुरुषत्वविशिष्टतया भाने स्थाणुत्वविशिष्टतया भानासंभवात् । तथाच तत्र ज्ञानद्वयमवश्यं वाच्यम् । तत्र चोर्ध्वद्रव्यमानमनुभवः । स्थाणुपुरुषमानं तु स्मरणम् । तत्रापि पूर्वमनुभवः । तेन कोटिद्वयस्मृतिहेतुसंस्कारोद्बोधे पश्चात्कोटिद्वयस्मरणं जायते । यथार्थत्वं तु द्वयोरप्यनयोर्निर्विवादमेव । ऊहविषयेऽप्येवमेव बोध्यम् । प्रतिभाऽपीति । भूतभाविवस्तुसाक्षात्काररूपाया अप्यस्या यथार्थत्वमेव । वस्तुसाक्षात्कारस्य वस्तुसदृशवस्तुसाक्षात्काररूपत्वात् । स्वसदृशे वस्तुनि स्वस्यांशतो विद्यमानत्वात् । तदाह—सर्वं विज्ञानमिति ।

अख्यातीति ।

आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा ।
तथाऽनिर्वचनख्यातिरित्येतत्ख्यातिपञ्चकम् ॥ १ ॥

१ ग. °व एवं सो° । २ क. घ. 'दः । यद' ।

ख्यात्यनिर्वचनीयख्यात्यन्यथाख्यात्यसत्ख्यातिवादिनो निरस्य सत्ख्याते पक्षस्वीकारात् ।

---

योगाचारा माध्यमिकास्तथा मीमांसका अपि ।
नैयायिका मायिनश्च प्रायः ख्यातीः क्रमाज्जगुः ॥ २ ॥

तत्राऽऽत्मख्यातिर्नामाऽऽत्मनो बुद्धेः ख्यातिर्विषयरूपेण प्रतिभासः । इदं रजतमिति बुद्धिरेव रजतरूपेणावभासते । न तत्र विषयान्तरापेक्षा । अयं घट इत्यादिषु सर्वत्र बुद्धेरेव विषयाकारोल्लेखसंभवेनात्रापि तथैवौचित्यात् । प्रयोगश्च—विमतं रजतं बुद्धिरूपं चक्षुरादिसंप्रयोगमन्तरेणापरोक्षत्वात्संमतबुद्धिवदिति विज्ञानवादिनो बौद्धाः । तच्चिन्त्यम् । चतुर्विधान्हेतून्प्रतीत्य चित्तचैत्ता उत्पद्यन्त इति हि तेषां मतम् । तत्र न तावत्सहकारिप्रत्ययाख्यादालोकादे रजताकारोदयः संभवति । तस्य स्पष्टतामात्रहेतुत्वात् । नाप्यधिपतिप्रत्ययाख्याच्चक्षुरादेः । तस्य विषयनियममात्रहेतुत्वात् । नापि समनन्तरप्रत्ययाख्यात्पूर्वज्ञानात् । विजातीयघटज्ञानानन्तरं विजातीयरजतभ्रमोदयादर्शनात् । नाप्यालम्बनप्रत्ययाख्याद्बाह्यात् । विज्ञानवादिना तदनङ्गीकारात् । ततः कथं रजताद्यसत्त्वे विज्ञानस्य रजताकारसमर्पणम् । नच संस्कारसामर्थ्येन तत्कल्पनमिति वाच्यम् । विकल्पासहत्वात् । तथाहि—स संस्कारः किं स्थायी क्षणिको वा । आद्ये क्षणिकं सर्वमिति स्वदीयसिद्धान्तहानिः । अन्त्ये तस्य द्वितीयक्षणावृत्तित्वेन रजताकारकल्पनाहेतुत्वायोगात् । पक्षद्वयेऽपि तस्य संस्कारस्य ज्ञेयत्वेन विज्ञानमात्रवादहानिश्च । किंच स रजताकारः कथमुत्पद्यते । बाह्यार्थाज्जायत इति तु वक्तुमशक्यम् । त्वया बाह्यार्थस्यानङ्गीकारात् । ज्ञानमपि विशुद्धं तावन्न तज्जनकम् । तस्य मोक्षरूपत्वात् । दुष्टकारणजन्यज्ञानं तज्जनकमिति चेत्तत्रापि जनकीभूतज्ञानमेव रजतग्राहकमन्यद्वा । नाऽऽद्यः । क्षणिकयोर्जन्यजनकयोर्भिन्नकालीनत्वेनापरोक्षरजतप्रतीत्यभावप्रसङ्गात् । नान्त्यः । अन्यस्य ज्ञानस्य रजतजन्यत्वे रजतादिर्बाह्योऽर्थोऽङ्गीकार्यः स्यात् । रजताजन्यत्वे तु रजतं न तद्विषयः स्यात् । ज्ञानाकारार्पको हेतुर्विषय इत्यङ्गीकारात् । तस्मादात्मख्यातिपक्षे रजतमेव न प्रतीयेत । किंच बुद्धिबोध्ययोरभेदं ब्रुवता विरुद्धधर्माध्यासेन भेदः कश्चिदङ्गीकृतो न वा । न चेत्क्षणभेदाद्यसिद्धिप्रसङ्गः । अङ्गीकृतश्चेच्छ्वेतपीताद्यनेकाकारग्राहिण्येकत्र ज्ञाने कथं मिथोविरुद्धश्वेतपीतादितादात्म्यसंभव इति बोध्यम् ।

असत्ख्यातिर्नामासतो रजतादेः ख्यातिः प्रतीतिरिति शून्यवादिनो बौद्धाः । वाचस्पतिमिश्रा अपि शुक्ताविदं रजतमिति ज्ञाने प्रसिद्धयोः शुक्तिरजतत्वयोरलीक एव समवायो भासत इत्यसत्ख्यातिमङ्गीचक्रुः । तच्चिन्त्यम् । असतो भानासंभवात् । अन्यथा शशशृङ्गादेरपि भानं स्यात् । ननु पदार्थस्य सत्त्वं न सिध्यतीत्यसत्ख्यातिरवश्य-

मेष्टव्या। पदार्थश्च प्रमाणप्रमेयभेदेन द्विधा भिन्नः। तत्र प्रमेयसिद्धिः प्रमाणाधीना। प्रमाणसिद्धिश्च तस्मादेव प्रमाणादन्यतो वा। आद्य आत्माश्रयः। द्वितीयेऽनवस्था। तथाच प्रमाणासिद्धौ प्रमेयमपि न सिध्यतीति सर्वत्रासत्ख्यातिरेवेति चेन्न। त्वदुक्तोऽयं प्रमाणप्रतिषेधः प्रमाणासिद्धो न वा। आद्ये व्याहतिः। अन्त्ये प्रमाणप्रतिषेधं स्वीकुर्वता त्वया प्रमाणं कुतो न स्वी क्रियते। प्रमाणप्रतिषेधस्य प्रमाणस्य च प्रमाणासिद्धत्वाविशेषादित्यलमनेन।

मीमांसकास्त्वख्यातिमाहुः—अख्यातिर्नाम न ख्यातिरख्यातिरप्रतीतिः। शुक्तिरजतस्थल इदं रजतमित्यत्रेदमंश एव प्रत्यक्षप्रतीतिविषयः। न रजतांशः। तस्य चक्षुराद्यसंनिकर्षात्। रजतमिति तु स्मृत्याकारदर्शनमित्याहुः। तदपि चिन्त्यम्। रजतस्य प्रत्यक्षत्वेनानुभूयमानत्वात्। स्मर्यमाणस्याप्रवर्तकत्वाच्च। न च यथा शुष्के पतिष्यामीति वाग्वादिवशात्कर्दमे पतति तथैवात्रावशागतप्रवृत्तिन्यायेन रजतप्रतीत्यभावेऽपि प्रवृत्तिरिति वाच्यम्। इदं रजतमित्यत्रेदमर्थभूतभास्वरद्रव्यमभिवृक्ष्यैव प्रवृत्तेरुपलभ्यमानत्वात्। नचारजतेऽपि रजतभेदाग्रहात्प्रवृत्तिरस्त्विति वाच्यम्। अग्रहस्य कचिदपि प्रवृत्तिहेतुत्वादर्शनात्। किं च यथा निवृत्तिकारणभूतभेदग्रहाभावात्प्रवर्तते तथा प्रवृत्तिकारणभूताभेदग्रहाभावात्किं न निवर्तेत। यथा भेदग्रहस्य निवृत्तिकारणत्वं नेदं रजतमित्यत्र दृश्यत एवमभेदग्रहस्य प्रवृत्तिकारणत्वमिदं रजतमित्यभ्रान्तबुद्धौ दृष्टमेव। ततश्चाभेदग्रहरूपप्रवृत्तिकारणाभावात्प्रवृत्तिप्रतिपक्षभूता निवृत्तिः कथं न स्यात्। न च सत्यरजते प्रवृत्तिरपि रजतभेदाग्रहादेवेति वाच्यम्। तथाऽपि रजतार्थिनः कदाचिद्रजतान्निवृत्तिरपि रजताभेदाग्रहादिति दृश्यत इति शुक्तिरजतस्थले निवृत्तिकारणभूतरजताभेदाग्रहसद्भावान्निवृत्तिरनिवार्यैवेत्यवधेयम्।

अन्यथाख्यातिर्नामान्यस्यान्यरूपेण प्रतीतिः। देशकालान्तरगतं रजतमेव शुक्तिसंप्रयुक्तेन दोषोपहतेनेन्द्रियेण शुक्त्यात्मना गृह्यते। न चैवमननुभूतस्यापि ग्रहणं स्यादिति वाच्यम्। सादृश्यादेर्नियामकत्वात्। प्रयोगश्च विवादपदं शुक्तिशकलं रजतज्ञानविषयो रजतोपायान्यत्वे सति रजतार्थिप्रवृत्तिविषयत्वात्सत्यरजतवत्। रजतस्योपायः कारणं खन्यादिः। तस्य रजतार्थिप्रवृत्तिविषयत्वेऽपि रजतज्ञानविषयत्वाभावाद्व्यभिचारः। तद्वारणाय सत्यन्तं विशेषणमुपात्तमिति नैयायिकाः। तत्रान्यथात्वं किं ज्ञानेऽथवा फल उत वस्तुनि। नाऽऽद्यः। रजताकारं ज्ञानं शुक्तिमालम्बत इति ज्ञानेऽन्यथात्वं वाच्यम्। तत्र रजताकारमस्तं ज्ञानं प्रति शुक्तेः स्वाकारसमर्पणासंभवः। न द्वितीयः। फलस्य स्फुरणस्य भ्रान्तौ सम्यग्ज्ञाने वा स्वरूपतो वैषम्यादर्शनात्। नापि तृतीयः। वस्तुन्यन्यथात्वं हि शुक्तिकायां रजततादात्म्यं किंवा रजताकारेण परिणामः। आद्येऽत्यन्तभिन्नयोर्वास्तवतादात्म्यासंभवः। द्वितीये तु बाध एव न स्यात्। रजतज्ञानमबाध्यं

परिणामज्ञानत्वात्क्षीरपरिणामदुग्धज्ञानवत्। शुक्तिः पुनः क्षीरवदेव बाध्येत। तथा चान्यथाख्यातिर्दुर्वचा। प्रयोगश्च–विमता शुक्ती रजतज्ञानाविषयः शुक्तित्वादितरशुक्तिवत्। नच प्रागुक्तहेतुना सत्प्रतिपक्ष इति वाच्यम्। तस्य सविशेषणत्वेन दुर्बलत्वात्।

मायिनस्त्वनिर्वचनीयख्यातिमाहुः। अनिर्वचनीयख्यातिर्नाम सत्त्वेनासत्त्वेन चानिर्वचनीयस्य रजतादेः ख्यातिः प्रतीतिः। शुक्तिरजतस्थले च रजतं न सत्। भ्रान्तिबाधयोरसंभवात्। नाप्यसत्। ख्यातिबाधयोरसमनात्। बाधस्य प्रतियोगिपूर्वकत्वेनासतस्तदसंभवात्। किंतु शुक्त्यज्ञानपरिणामभूतं सदसद्भ्यामनिर्वचनीयमपूर्वं रजतमुत्पद्यते। तदेव च तत्र रजतज्ञानविषयः। तदुक्तम्—

'सत्त्वे न भ्रान्तिबाधौ स्तो नासत्त्वे ख्यातिबाधने।
सदसद्भ्यामनिर्वाच्याविद्याऽऽविद्यैः सह भ्रमः' इति॥

आविद्यैरविद्यापरिणामभूतै रजतादिभिः। प्रपञ्चस्याप्यनाद्यविद्यापरिणामभूतत्वादनिर्वचनीयत्वमेवेति। तदपि चिन्त्यम्। अनिर्वचनीयत्वं वाच्यत्वराहित्यं चेत्सर्वव्यवहारविरोधः। ब्रह्मण्यपि त्वया वाच्यत्वराहित्याभ्युपगमेन तस्यापि प्रपञ्चतुल्यत्वापत्तिश्च। सत्त्वासत्त्वराहितत्वमिति चेच्छुक्तिरजतादावपि प्रातिभासिकसत्त्वस्य त्वयाङ्गीकारेण तत्रानिर्वचनीयत्वानापत्तिः। न च सत्त्वपदेन पारमार्थिकमेव सत्त्वं गृह्यत इति वाच्यम्। तथाऽपि ब्रह्मण्यतिप्रसङ्गात्। न हि ब्रह्मण्यपि पारमार्थिकं सत्त्वं नाम कश्चिद्धर्मस्त्वयेष्यते। तस्य निर्धर्मकत्वेन त्वयाऽङ्गीकारात्। अथ सदसद्विलक्षणत्वमेवानिर्वचनीयत्वमिति चेन्न। तथाविधस्य वस्तुनः प्रमाणशून्यत्वात्। सर्वं हि वस्तुजातं प्रतीतिव्यवस्थाप्यम्। प्रतीतिश्च काचित्सदाकारा घटादिविषया। काचिदसदाकारा च शशशृङ्गादिविषया। न तत्र तृतीया विधा काचिदुपलभ्यते। प्रतीतिविरुद्धस्यापि प्रतीतिविषयत्वेऽङ्गीक्रियमाणे सर्वं सर्वप्रतीतेर्विषयः स्यात्। सतोऽपि घटादेरसत्प्रतीतिविषयत्व स्यात्। असतोऽपि शशशृङ्गादेः सत्प्रतीतिविषयत्वं स्यात्। किंच प्रपञ्चस्य प्रतीतिबाधाभ्यां सत्त्वासत्त्वयोः सिद्धौ तयोः समुच्चयो विकल्पो वा स्यान्न तद्विलक्षणत्वम्। किंचैतदनिर्वचनीयत्वं स्वयं सदसद्वा। सत्त्वे कथं तस्यासत्यप्रपञ्चवृत्तिता। असत्त्वे तु किं तेन कृतं स्यात्। किंचानिर्वचनीयरजताद्युत्पत्तौ किं कारणम्। न तावत्प्रतीतिः। उत्पत्तेः प्राक्तस्या असंभवात्। नापीन्द्रियाणि। तेषां ज्ञानकारणत्वात्। नापि तद्गतो दोषः। तस्य पुरुषाश्रयत्वेन शुक्तावनिर्वचनीयरजतोत्पादकत्वायोगात्। नापि दुष्टानीन्द्रियाणि। तेषामपि स्वकार्यभूते ज्ञान एव विशेषकरत्वात्। अथ विषयगतो दोषः कारणमिति चेत्स किं विषयमात्रनिष्ठो विषयपुरुषोभयनिष्ठो वा। आद्ये पुरुषस्य सर्वथा निर्दोषत्वेन भ्रमासंभवः। अन्त्ये तूभयनिष्ठदोषस्य केवलविषये कार्योत्पादकत्वासंभव इति बोध्यम्।

सत्ख्यातिर्नाम ज्ञानविषयस्य सत्यत्वम्। तर्हि भ्रमत्वं कथमिति चेद्विषयव्यवहारबाधाद्भ्रमत्वम्। तदुपपादयामः—पञ्चीकरणप्रक्रियया पृथिव्यादिषु सर्वत्र सर्वभूतानां विद्यमानत्वात्। अत एव शुक्तिकादौ रजतांशस्य विद्यमानत्वाज्ज्ञानविषयस्य सत्यत्वम्। तत्र रजतांशस्य स्वल्पत्वात्तत्र न व्यवहार इति तज्ज्ञानं भ्रमः। शुक्त्यंशभूयस्त्वज्ञानाद्भ्रमनिवृत्तिः। स्वप्नादिज्ञानं तु सत्यमेव। तत्तत्पुरुषानुभाव्यतया तत्तत्कालावसानान्रथादीन्परमपुरुषः सृजतीति श्रुत्याऽवगम्यते। पीतः शङ्ख इत्यादौ नयनवर्तिपित्तद्रव्यसंयुक्ता नायनरश्मयः शङ्खादिभिः सह संयुज्यन्ते। तत्र पित्तगतपीतिमाभिभूतः शङ्खगतशुक्लिमा न गृह्यते। अतः स्वर्णानुलिप्तशङ्खवत्पीतः शङ्ख इति प्रतीयते। सूक्ष्मत्वात्पीतिमा स्वनयननिष्क्रान्ततया स्वेनैव गृह्यते न

---

विषयव्यवहारेति। रज्ज्वां दूरतः सर्पज्ञाने ततः समीपं गतः सर्पज्ञानं भ्रम इति प्रत्येति। तत्र यद्यपि रज्ज्वां सर्पांशानां विद्यमानत्वेन विषयस्य सत्यत्वं तथाऽपि तदंशानामल्पत्वेन तत्रायं सर्प इति व्यवहारो न भवति। अत एव तस्य भ्रमत्वम्। न तु विषयासत्यत्वात्। रज्ज्वां सर्पांशानां विद्यमानत्वं तु।

'तदेव सदृशं तस्य यत्तद्द्रव्यैकदेशभाक्'।

इत्युक्तरीत्या सिद्धम्। अत एव।

'सोमाभावे च पूतीकग्रहणं श्रुतिचोदितम्।
सोमावयवसद्भावादिति न्यायविदो विदुः'॥

शुक्तिकादाविति। रजतस्य तेजस्त्वेन तदंशानां पञ्चीकरणप्रक्रियया शुक्तिकादिपृथिव्यां विद्यमानत्वादित्यर्थः। श्रुत्येति। तथाच श्रुतिः—'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान्पथः सृजते....स हि कर्ता' (बृ. ४।३।१०) इति। रथे युज्यन्त इति रथयोगा अश्वाः। एते च पदार्थास्तत्तत्पुरुषानुभाव्या एवेत्यन्येषां न तदुपलब्धिः। तत्तत्कालावसाना एवेति तस्यैव स्वप्नद्रष्टुर्जागृतौ न तदुपलब्धिः। एतादृशविचित्रपदार्थकर्तृत्वं सत्यसंकल्पस्याऽऽश्चर्यशक्तेरीश्वरस्य संभवत्येवेति न काचिदनुपपत्तिः। प्रतीयत इति। ननु दूरस्थशङ्खस्य सामीप्याभावात्तत्रस्थपित्तद्रव्यं पित्तोपहतेनापि पुरुषेण कथं गृह्यत इति चेन्न। पित्तोपहतेन पुरुषेण स्वनयननिष्क्रान्तपित्तद्रव्यज्ञानजनितसंस्कारसहायेन शङ्खस्थं पित्तद्रव्यं दूरस्थमपि स्वचाक्षुषरश्मिभिर्ज्ञायते। यथाऽऽकाशेऽतिदूरगतः पक्षी न द्रष्टुं शक्यते। परं तु स्वसमीपदेशोत्पतनकालादारभ्य सततं दृश्यमानस्तत्संस्कारसह-

---

१ घ. °र्थभिन्ना नय°।

स्वन्यैः। जपाकुसुमसमीपवर्तिस्फटिकमणिरपि रक्त इति गृह्यते। तज्ज्ञानं सत्यमेव। मरीचिकायां जलज्ञानमपि पञ्चीकरणप्रक्रियया पूर्वोक्तवदुपपद्यते। पञ्चीकरणप्रक्रिया तूत्तरत्र वक्ष्यते। दिग्भ्रमोऽपि तथैव। दिशि दिगन्तरस्य विद्यमानत्वात्। अवच्छेदकमन्तरेण दिगितिद्रव्यान्तरानङ्गीकाराच्च। अलातचक्रादौ तु शैघ्र्यात्तदन्तरालाग्रहणात्तत्तद्देशसंयुक्ततत्तद्वस्तुन एव चक्राकारेण ग्रहणम्। तदपि सत्यमेव। दर्पणादिषु निजमुखादिप्रतीतिरपि यथार्था। दर्पणादिप्रतिहतगतयो नायनरश्मयो दर्पणादिग्रहणपूर्वकं निजमुखादि गृह्णन्ति। तत्राप्यतिशैघ्र्यादन्तरालाग्रहणात्तथा प्रतीतिः। द्विचन्द्रज्ञानादावप्यङ्गुल्यवष्टम्भतिमिरादिभिर्नायनतेजोगतिभेदेन सामग्रीभेदात्सामग्रीद्वय-

---

कृतेन चक्षुषा दूरगतोऽपि ज्ञायते तद्वत्। रक्त इतीति। जपाकुसुमप्रभाभिभूतत्वात्। तत्र जपाकुसुमप्रभा वितताऽपि स्फटिकादिस्वच्छद्रव्यसंयुक्ता स्फुटतरमुपलभ्यते। तत एव च तत्समीपवर्तिनोऽन्ये घटादयः पदार्था न रक्ता उपलभ्यन्ते। पञ्चीकरणप्रक्रिययेति। तथा च तेजःपृथिव्योरप्यम्बुनो विद्यमानत्वात्तज्ज्ञानं सत्यमेव। तत्रेन्द्रियदोषेण तेजःपृथिव्योरग्रहणम्। अदृष्टवशाच्चाम्बुन एव ग्रहणम्। अयथार्थज्ञानवादिभिरपि क्वचिदेव भ्रमस्य स्वीकृतत्वेन तन्नियामकत्वमदृष्टस्याङ्गीकर्तव्यमेव। विद्यमानत्वादिति। तथा च पूर्वदिशः पश्चिमदिक्त्वेन ज्ञानं यथार्थमेव। पूर्वस्या दिशि पश्चिमदिगंशस्य वस्तुतः सत्त्वात्। वस्तुतो दिश एकत्वात्। दिग्भेदस्यौपाधिकत्वात्। यो ग्रामस्तत्पश्चिमदिक्स्थैः पूर्वदिक्स्थ इति व्यवह्रियते स एव तत्पूर्वदिक्स्थैः पश्चिमदिक्स्थ इति व्यवह्रियते। द्रव्यान्तरानङ्गीकारादिति। एतच्च चतुर्थेऽवतार आकाशनिरूपणे वक्ष्यते। अलातेति। अलातमुल्मुकम्। तद्यदा चक्रवद्भ्राम्यते तदा वस्तुतस्तत्प्रतिक्षणमेकैकदिक्संयुक्तमपि सर्वदिक्संयुक्तमिव वर्तुलाकारं दृश्यते। तत्रान्तरालाग्रहणाद्वर्तुलाकारप्रतीतिर्भवति। वास्तविकचक्रेऽपि वर्तुलाकारप्रतीतावन्तरालाग्रहणमेव मूलम्। इयांस्तु विशेषः—वास्तविकचक्रेऽन्तरालाभावादेव तदग्रहणम्। अत्र त्वन्तरालसत्त्वेऽपि शैघ्र्यात्तदग्रहणमिति। गृह्णन्तीति। ननु स्वमुखस्यैव ग्रहणे स्वमुखस्य स्वाभिमुखत्वाभावेन तस्य स्वाभिमुखत्वेन कथं प्रतीतिरित्यत आह—तत्रापीति। अन्तरालाग्रहणात्। दर्पणमुखयोर्यदन्तरालं तदग्रहणात्। अङ्गुल्यवष्टम्भः। अङ्गुल्या नेत्रनिरोधः। तिमिरः। नेत्ररोगः। तेजोगतीति। तेजोगतिरेव चन्द्रग्रहणसामग्री। सा च द्विधा। एका स्वाभाविकी

---

१ घ. 'दौ शैघ्र्याद'। २ घ. 'यो नय°'। ३ क. ख. ग. 'दि विदं ए°'।

मन्योन्यनिरपेक्षं चन्द्रद्वयग्रहणे हेतुर्भवति। सामग्रीद्वयं पारमार्थिकं तेन चन्द्रद्वयज्ञानं भवति।

अतः सर्वं ज्ञानं सत्यं सविशेषविषयं च। निर्विशेषवस्तुनोऽग्रहणात्। एवंभूतं प्रत्यक्षं भेदविशिष्टमेव प्रथमतो गृह्णाति। भेद इति व्यवहारे तु प्रतियोग्यपेक्षा न तु स्वरूपे। तेनानवस्थान्योन्याश्रयदोषोऽपि नास्ति। उपर्युपर्यपेक्षाऽनवस्था। परस्परापेक्षाऽन्योन्याश्रयः। ननु दशमस्त्वमसीत्येतदपि प्रत्यक्षं किं न स्यादिति चेन्न। त्वमित्येतस्य प्रत्यक्षत्वेऽपि दशमोऽहमित्यस्य वाक्यजन्यत्वात्। यदि दशमोऽहमित्यस्य प्रत्यक्षविषयत्वं तर्हि धर्मवांस्त्वमसी-

---

ऋजुः। द्वितीया त्वङ्गुलीनिरोधादिमूलिका वक्रभूता। तत्रैका सामग्री स्वदेशविशिष्टं चन्द्रं गृह्णाति। द्वितीया तु किंचिद्वक्रगतिश्चन्द्रसमीपदेशग्रहणपूर्वकं चन्द्रं स्वदेशवियुक्तं गृह्णाति। न च चन्द्रसमीपदेशे चन्द्राभावात्कथं तत्र चन्द्रग्रहणमिति वाच्यम्। चन्द्राधिकरणदेशतत्समीपदेशयोरन्तरालाग्रहणेन द्वितीयसामग्र्या चन्द्रस्य स्वाधिकरणदेशस्थत्वेनाग्रहणाच्च तथा प्रतीतेः। ततश्च ग्रहणभेदेन ग्राह्याकारभेदादेकत्वग्रहणाभावाच्च द्वौ चन्द्राविति भवति प्रतीतिरिति बोध्यम्।

अग्रहणादिति। विशेषरहितस्य वस्तुनो रूपाद्यभावान्न तत्र प्रत्यक्षं क्रमते निर्विकल्पकप्रत्यक्षमपि गुणसंस्थानादिविशिष्टविषयकमेवेति प्रागुक्तमेव। भेदविशिष्टमेवेति। संस्थानरूपजातेरेव भेदस्वरूपत्वेन तादृशभेदविशिष्टमेव गृह्णातीत्यर्थः। यदि भेदो नाम जात्यपेक्षया कश्चिदन्योऽन्योन्याभावरूपः स्यात्तर्हि तत्स्वरूपे प्रतियोग्यपेक्षा स्याद्धटः पटाद्भिन्न इति। तत्र च घटनिष्ठो भेदो घटस्वरूप एव वा घटाद्भिन्नो वा। आद्ये घटस्वरूपे गृहीते स्वरूपव्यवहारवत्सर्वस्माद्भेदव्यवहारप्रसक्तेः। स्वरूपमात्रभेदवादिनो भेदस्य प्रतियोग्यपेक्षायाः कल्पयितुमशक्यत्वात्। हस्तः कर इतिवद्धटो भिन्न इति पर्यायत्वं च स्यात्। अन्त्ये घटनिष्ठे प्रथमे भेदे घटप्रतियोगिको द्वितीयो भेदः कल्प्यः। तस्मिंश्च द्वितीये भेदे प्रथमभेदप्रतियोगिकस्तृतीयो भेदः कल्प्य इत्यनवस्था स्यात्। किंच जात्यादिधर्मविशिष्टवस्तुग्रहणे सति भेदग्रहणं भेदग्रहणे सति जात्यादिधर्मविशिष्टवस्तुग्रहणम्। अगृहीते हि घटस्य पटाद्भेदेऽयं घटजातीय इति ज्ञातुमशक्यत्वादित्यन्योन्याश्रयः स्यात्। अतो जातिरेव भेद इत्यङ्गीकार्यमिति भेदविशिष्टस्यैव प्रत्यक्षमिति सिद्धम्। ननु यदि जातिरेव भेदस्तर्हि तस्य प्रतियोग्यपेक्षा न स्यादिति चेदिष्टमेवैतत्। कथं तर्हि सा लोके दृश्यत इत्यत आह—भेद इति व्यवहार इति। धर्मवानिति। नच धर्मस्यातीन्द्रियत्वान्न प्रत्यक्षमिति वाच्यम्।

---

१ घ. °न द्विचन्द्रज्ञा°। २ ग. °वं विज्ञा°। ३ ग. °क्षं प्रथमतो भेदमेव गृ°। ४ क. °षो ना°।

स्येतस्यापि प्रत्यक्षत्वं स्यात्। अङ्गीकारेऽतिप्रसङ्गात्। अत एव तत्त्वमसीतिवाक्यस्य नापरोक्षज्ञानजनकत्वम्।

एतेन प्रत्यक्षप्रमाकरणं प्रमाणम्। प्रमा चाऽऽत्मचैतन्यमेव। चैतन्यं च त्रिविधम्—अन्तःकरणावच्छिन्नं चैतन्यम्। अन्तःकरणवृत्त्यवच्छिन्नं चैतन्यम्। विषयावच्छिन्नं चैतन्यं चेति। यदा त्रयाणामैक्यं तदा साक्षात्कारः। सोऽपि निर्विशेषविषय एवाभेदमेव गृह्णातीत्यादिकुदृष्टिकल्पना निरस्ता।

---

तथाऽप्ययं पर्वतः परभागे वह्निमानित्युपदेशजन्यज्ञानस्य वह्न्यंशे प्रत्यक्षत्वप्रसङ्गात्। नच वह्निमत्त्वेन पर्वतस्य प्रत्यक्षविषयत्वमसिद्धमिति वाच्यम्। अत्रापि दशमत्वविशिष्टाकारेण प्रत्यक्षविषयत्वासिद्धेः। एतेन तत्त्वमसीति वाक्यं स्वार्थप्रत्यक्षज्ञानजनकं स्वतः प्रत्यक्षार्थविषयत्वाद्दशमस्त्वमसीत्यादिवाक्यवदित्यनुमानं निरस्तम्। तदेवाऽऽह—अत एवेति।

प्रत्यक्षप्रमेति। मायावादिनां मतमेतत्। आत्मचैतन्यमेवेति। अत्र प्रमाणं 'यत्साक्षादपरोक्षाद्ब्रह्म' (बृ. ३। ४। १) इति श्रुतिः। अपरोक्षादित्यस्यापरोक्षमित्यर्थः। ब्रह्मणः प्रमाणव्यापारद्वारकं प्रत्यक्षत्वं व्यावर्तयितुं श्रुतौ साक्षादिति विशेषणम्। अन्तःकरणावच्छिन्नमिति। इदं प्रमातृचैतन्यमिति व्यवह्रियते। अन्तःकरणवृत्त्यवच्छिन्नमिति। इदं प्रमाणचैतन्यमिति व्यवह्रियते। विषयावच्छिन्नमिति। इदं विषयचैतन्यमिति व्यवह्रियते। त्रयाणामैक्यमिति। यथा तडागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान्प्रविश्य तद्वदेव चतुष्कोणाद्याकारं भवति तथा तैजसमन्तःकरणमपि चक्षुरादिद्वारा घटादिविषयदेशं गत्वा घटादिविषयाद्याकारेण परिणमते। स एव परिणामो वृत्तिरित्युच्यते। तत्र च घटादेस्तदाकारवृत्तेश्च बहिरेकत्र देशे समवधानात्तदुभयावच्छिन्नं चैतन्यमेकमेव। विभाजकयोरप्यन्तःकरणवृत्तिघटविषययोरेकदेशस्थत्वेन भेदाजनकत्वात्। अत एव मठान्तर्वर्तिघटावच्छिन्नाकाशो न मठावच्छिन्नाकाशाद्भिद्यते। तथा चायं घट इत्यादिप्रत्यक्षस्थले घटाकारवृत्तेर्घटसंयोगितया घटावच्छिन्नचैतन्याद्वृत्त्यवच्छिन्नचैतन्यस्याभिन्नतया घटज्ञानस्य प्रत्यक्षत्वमिति वेदान्तपरिभाषायामुक्तम्। निर्विशेषविषय इति। घटोऽस्तीत्यत्रास्तित्वं तद्भेदश्च व्यवह्रियते। तत्र द्वयोरपि व्यवहारयोः प्रत्यक्षमूलत्वं न संभवति। अस्तित्वव्यवहारप्रयोज-

---

१ क. 'मात्वं चा'।

निर्विकल्पकं तु नामजात्यादियोजनाहीनं वस्तुमात्रावगाहि किंचिदिदमित्यादि नैयायिकमतमपि निरस्तम्। ननु

'काणादं पाणिनीयं च सर्वशास्त्रोपकारकम् ॥

इत्युक्तत्वात्कथं गौतममतनिरास इति चेदुच्यते—नास्माभिः कार्त्स्न्येन तन्मतनिरासः क्रियते। यावदिह युक्तियुक्तं तावत्स्वीक्रियते। परकल्पिततटाकोपजीवनवत् । न च तटाकस्थः पङ्कोऽपि स्वी क्रियते। अतः

---

कवटस्वरूपप्रत्यक्षानन्तरं घटेतरस्मृतौ सत्यां तादृशेतरप्रतियोगिकभेदप्रत्यक्षसंभवेन तयो भिन्नकालज्ञानफलत्वात् । प्रत्यक्षज्ञानस्यैकक्षणवर्तित्वात्। तत्र प्रत्यक्षस्य प्राथमिकं स्वरूपविषयकत्वमवश्याश्रयणीयमिति न भेदः प्रत्यक्षेण गृह्यते। किंतु निर्विशेषसन्मात्रमेवेति तदाशयः।

निरस्तमिति। निर्विकल्पकमपि सविशेषविषयमेव। तस्य सविकल्पके स्वस्मिन्ननुभूतपदार्थविशिष्टप्रतिसंधानहेतुत्वात्। निर्विकल्पकं न सर्वविशेषरहितस्य ग्रहणम्। तथाभूतस्य कदाचिदपि ग्रहणायोगात्। अनुपपत्तेश्च। केनाचिद्विशेषेणेदमित्थमिति हि सर्वा प्रतीतिरुपजायते। किंतु गुणसंस्थानादिविशिष्टप्रथमपिण्डग्रहणमेव निर्विकल्पकम्। तथैव प्रागुक्तम्। परमाणुकारणत्वेति। इदमग्रे चतुर्थेऽवतारे वक्ष्यते। वेदपौरुषेयत्वेति। ननु वेदवाक्यं सकर्तृकं वाक्यत्वादस्मदादिवाक्यवदित्यनुमानेन तस्य पौरुषेयत्वं सिध्यतीति चेन्न। अनुग्राहकतर्काभावेनास्य हेतोरप्रयोजकत्वात्। वाचा विरूप नित्ययेति श्रुतिविरोधेन कालात्ययापदिष्टत्वाच्च। कर्तृस्मरणाभावाच्च तस्यापौरुषेयत्वम्। न च जीर्णकूपारामादिषु व्यभिचार इति वाच्यम्। उपदेशपारम्पर्येण स्मर्तव्यत्वे सत्यस्मरणस्य कर्त्रभावनियतत्वात्। वेदस्याकर्तृकत्वमिति परमर्षिप्रवादाच्च। ननु सर्ववेदकर्तरि भगवति विद्यमानेऽपि मन्त्रादयस्तदनुविधायिनश्च वेदवक्तारमपलपन्तीति वाच्यम्। तेषां तदपलापे प्रयोजनाभावात्। न हि सत्यनिष्ठास्तादृशा महात्मानो भगवन्तमप्यपलपन्तीति संभवति। न च नित्यस्य वेदस्य स्फ्यकपालादिभिरनित्यैः कथं योग इति वाच्यम्। स्फ्यकपालपुरोडाशादीनामपि साजात्येनानादित्वात्। न चैवं

'प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते'

इत्युक्तिरसंगतेति वाच्यम्। अनादिसिद्धानां वेदांशानामनन्तत्वात्कस्मिंश्चिन्मन्वन्तरे कश्चिद्वेदांशः प्रवर्तत इति तदभिप्रायात्। ऋचः सामानि

---

१ ध. 'त्स्न्येनास्य मतस्य नि'। २ ध. 'न खलु त'।

परमाणुकारणत्ववेदपौरुषेयत्वेश्वरानुमानिकत्वजीवविभुत्वानि, सामान्यसमवायविशेषाणां पदार्थत्वेन स्वीकारः, उपमानादेः पृथक्प्रमाणत्वकल्पनं, संख्यापरिमाणपृथक्त्वपरत्वापरत्वगुरुत्वद्रवत्वादीनां पृथग्गुणत्वकल्पनं, दिशोऽपि द्रव्यत्वकल्पनमित्यादिसूत्रकारादिविरुद्धप्रक्रिया नास्माभिः स्वीक्रियत इति न विरोधः।

इति श्रीवाधूलकुलतिलकश्रीमन्महाचार्यस्य प्रथमदासेन श्रीनिवासदासेन विरचितायां यतीन्द्रमतदीपिकायां प्रत्यक्षनिरूपणं नाम प्रथमोऽवतारः ॥ १ ॥

---

जाज्ञिर इति श्रुतिस्तु प्रादुर्भावमात्रपरा। ईश्वरानुमानिकत्वेति। ननु क्षित्यङ्कुरादि सकर्तृकं कार्यत्वाद्घटवदित्यनुमानात्तत्सिद्धिरिति चेन्न। तथा सति सपक्षे यादृक्साध्यमवगतं तादृगेव पक्षे स्यात्। नहि पर्वतेऽनुमीयमानो वह्निरुष्णत्वमपहाय सिध्येत्। तथा च स कर्ता कर्तृव्यापककार्यकरणकर्मादिमान्स्यात्। स चानिष्टः। अधिकं तत्त्वमुक्ताकलापे ( ३।१८ ) द्रष्टव्यम्। नन्वेवमीश्वरानुमानदूषणे—

विद्याचारो गुरुद्रोही वेदेश्वरविदूषकः।
त एते बहुपाप्मानः सद्यो दण्ड्या इति श्रुतिः ॥

इति शास्त्रविरोधः स्यादिति चेन्न। अनुमानदूषणेऽप्यागमात्तत्सिद्धेः। अन्यथाऽस्मदादिप्रत्यक्षवेद्यत्वनिषेधेन तत्रापि तद्दूषकत्वप्रसङ्गः।

आगमेनानुमानेन ध्यानाभ्यासरसेन च।
त्रिधा प्रकल्पयन्प्रज्ञां लभते योगमुत्तमम् ॥

इत्याप्तोक्तावनुमानपदं मननपरमिति बोध्यम्। जीवविभुत्वेति। इदमग्रे जीवनिरूपणे वक्ष्यते। सामान्येति। इदमपि प्रमेयनिरूपणारम्भे वक्ष्यते। उपमानादेरिति। इदमनुमाननिरूपणे वक्ष्यते। संख्येति। इदं गुणनिरूपणे वक्ष्यते। दिशोऽपीति। इदमाकाशनिरूपणे वक्ष्यते ॥

इति श्रीयतीन्द्रमतदीपिकाप्रकाशे प्रथमोऽवतारः ॥ १ ॥

## अथ द्वितीयोऽवतारः ।

अथानुमानं निरूप्यते । व्याप्यस्य व्याप्यत्वानुसंधानाद्व्यापकविशेषप्रमितिरनुमितिः । तत्करणमनुमानम् । व्याप्यस्य धूमस्याग्निव्याप्यत्वानुसंधानाद्व्यापकविशेषप्रमितिर्वह्निप्रमितिः । अनधिकदेशकालनियतं व्याप्यम् । अन्यूनदेशकालवृत्ति व्यापकम् । तदिदमविनाभूतं व्याप्यम् । तत्प्रतिसंबन्धि व्यापकमिति । तेन निरुपाधिकतया नियतसंबन्धो व्याप्तिरित्युच्यते । सेयं यत्र धूमस्तत्र वह्निरिति व्याप्तिर्भूयो दर्शनाद्गृह्यते । व्याप्तिर्द्विविधा । अन्वयव्यतिरेकभेदात् । साधनविधौ साध्यविधिरूपेण प्रवृत्ता व्याप्तिरन्वयव्याप्तिः । यथा यो यो धूमवान्स सोऽग्निमानिति । साध्यनिषेधे साधननिषेधरूपेण प्रवृत्ता व्याप्तिर्व्यतिरेकव्याप्तिः । यथा योऽनग्निः स निर्धूम इति ।

सेयमुभयविधा व्याप्तिरुपाधिसंभवे दुष्यति । साध्यव्यापकत्वे सति साधनाव्यापक उपाधिः । यथा वह्निना धूमे साध्यमान आर्द्रेन्धनसंबन्ध उपाधिः । मैत्रीतनयत्वेन श्यामत्वे साध्यमाने शाकपाकजत्वमुपाधिः । स

---

अथ द्वितीयोऽवतारः ।

साधनविधाविति । हेतुसद्भावे साध्यसद्भावोऽन्वयः । साध्याभावे साधनाभावो व्यतिरेकः । न पुनः साधनाभावे साध्याभावः ।

' व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते ।
तयोरभावयोस्तस्माद्विपरीतः प्रतीयते ' इत्युक्तेः ।

यथा वह्निनेति । अत्र यत्रयत्र धूमस्तत्रतत्राऽऽर्द्रेन्धनसंयोगो वर्तत इति तस्य साध्यव्यापकत्वम् । यत्रयत्र वह्निस्तत्रतत्राऽऽर्द्रेन्धनसंयोगोनास्ति, अयोगोलके व्यभिचारादिति तस्य साधनाव्यापकत्वम् । एवमग्रेऽपि । स्वव्यापकत्वेनाभिमतस्य यो व्यापकः स यदि स्वव्यापको न भवति तर्हि स्वव्यापकत्वेनाभिमते स्वव्यापकत्वं नास्त्येव । पर्वतो धूमवानित्यनुमाने वह्निव्यापकत्वेनाभिमतस्य धूमस्य व्यापको य आर्द्रेन्धनसंयोगः स वह्निव्यापको न भवतीत्युपाधिलक्षणादवगते वह्निव्यापकत्वं धूमस्य नास्तीति निश्चयो भवति । एतदेवोपाधेर्दूषकताबीजम् । तदुक्तम्—निरुपाधिकसंबन्धस्य व्याप्तिस्वरूपत्वात्तदभावेन व्याप्तिभङ्गादयमुपाधिर्दूषणमिति । उपाधिव्यभिचारेण हेतौ साध्यव्यभिचारानुमानमपि भवति । यथा वह्निर्धूमव्यभिचारी, धूमव्यापकार्द्रेन्धनसंयोगव्य-

---

१ क. ख. 'यम व्या°' । २ घ. '°लवर्ति व्या' ।

चोपाधिर्द्विविधः। निश्चितः शङ्कितश्चेति। निश्चितो यथा—विमतिपन्ना सेवा दुःखहेतुः, सेवात्वाद्राजसेवावदिति। अत्र पापारब्धत्वमुपाधिः। अयं चेश्वरसेवायां नास्तीति निश्चयादयं निश्चितोपाधिः। शङ्कितो यथा—विमतिपन्नो जीव एतच्छरीरावसाने मुक्तिमान्निष्पन्नसमाधित्वाच्छुकादिवदिति। अत्र कर्मात्यन्तपरिक्षय उपाधिः। स च निष्पन्नसमाधौ विमतिपन्ने जीवेऽस्ति नास्तीति संदिग्धत्वाच्छङ्कितोपाधिः। अतो निरुपाधिकसंबन्धवद्व्याप्यमिति सिद्धम्।

व्याप्यं साधनं लिङ्गमित्यनर्थान्तरम्। तस्य द्वे रूपे अनुमित्यङ्गभूते—व्याप्तिः पक्षधर्मता चेति। पञ्च रूपाण्यपि सन्ति। तानि च पक्षसत्त्वं सपक्षसत्त्वं विपक्षाद्व्यावृत्तिरबाधितविषयत्वमसत्प्रतिपक्षत्वं चेति। सिसाधयिषितधर्मविशिष्टो धर्मी पक्षः। यथाऽग्निमत्त्वादिसाधने पर्वतादिः। सिसाधयिषितसजातीयधर्मवान्सपक्षः। यथा महानसादिः। साध्यतैत्सजातीयशून्यो विपक्षः। यथा महाह्रदः। प्रबलेन प्रमाणेन पक्षे निश्चितसाध्याभाववत्त्वं बाधितविषयत्वम्। यथा महाह्रदोऽग्निमानित्यादि। तदभावस्त्वबाधितविषयत्वम्। समबलतया प्रतीयमानप्रमाणोपरोधाभावोऽसत्प्रतिपक्षत्वम्।

एवंभूतं व्याप्यं द्विविधम्—अन्वयव्यतिरेकिकेवलान्वयिभेदात्। पूर्वोक्तपञ्चरूपोपपन्नं व्याप्यमन्वयव्यतिरेकि। यथा पर्वतोऽग्निमान्धूमवत्त्वात्। यो यो धूमवान्स सोऽग्निमान्यथा महानसम्। योऽनग्निः स निर्धूमो यथा महाह्रद इति। तादृशमेव विपक्षरहितं व्याप्यं केवलान्वयि। यथा ब्रह्म शब्दवाच्यं वस्तुत्वाद्घटवत्। विपक्षाभावात्केवलान्वयी चतूरूपोपपन्नः। केवलव्यतिरेकिणि साध्याप्रसिद्धेस्तद्व्यतिरेकव्याप्तिर्दुर्ग्रहा। अतः केवलव्य-

---

भिचारित्वात्। व्यापकव्यभिचारिणो व्याप्यव्यभिचारावश्यकत्वादिति।

पर्वतादिरिति। तथाच तादृशपर्वतादिरूपपक्षवृत्तित्वं धूमादेरस्तीति प्रथमरूपसंगतिः। सिसाधयिषितसजातीयेति। सिसाधयिषितो धर्मः पर्वतादिवृत्तिर्वह्निस्तत्सजातीयो महानसादिवृत्तिर्वह्निस्तादृशवह्निरूपधर्मवानित्यर्थः। महानसादिरिति। तथाच तादृशमहानसादिरूपसपक्षवृत्तित्वं धूमादेरस्तीति द्वितीयरूपसंगतिः। महाह्रद इति। तथाच तादृशमहाह्रदरूपविपक्षावृत्तित्वं धूमस्यास्तीति तृतीयरूपसंगतिः। चतुर्थं दर्शयति प्रबलेनेति। पञ्चमं दर्शयति—समबलतयेति।

साध्याप्रसिद्धेरिति। यथा पृथिवी गन्धवती पृथिवीत्वादित्यत्र गन्धो न प्रसिद्धः पक्ष एव प्रसिद्धश्चेत्सिद्धसाधनम्। सपक्षे चेत्केवलव्यतिरेकित्वहानिः। विपक्षे चेद्व्या-

---

१ घ. °यं स्वीश्च°। २ ख. °त्वात्सदिग्धोपा°। ३ घ. °तज्जाती°। ४ घ °नसः। यो°।

तिरेकिनिरासः । केवलान्वयिन्यन्वयव्यतिरेकिणि चात्यन्तातीन्द्रियार्थगोचरता निरस्ता ।

तदेतदनुमानं स्वार्थं परार्थं चेति द्विधा विभज्य केचिदाहुः । सर्वेषामनुमानानां स्वमतिसंधानादिबलेन प्रवृत्ततया स्वव्यवहारमात्रहेतुत्वमिति स्वार्थानुमानमेवेत्यपरे । तदनुमानबोधकवाक्यं प्रतिज्ञाहेतूदाहरणोपनयनिगमनरूपं पञ्चावयवसंयुक्तम् । तत्र पक्षवचनं प्रतिज्ञा । यथा पर्वतोऽग्निमानिति । लिङ्गस्य वचनं हेतुः । यथा धूमवत्त्वादिति । व्याप्तिनिर्देशपूर्वकं दृष्टान्तवचनमुदाहरणम् । तद्द्विधा । अन्वयिव्यतिरेकिभेदात् । यथा यो यो धूमवान्स सोऽग्निमान्यथा महानसमित्यन्वयोदाहरणम् । योऽनग्निः स निर्धूमो यथा महाह्रद इति व्यतिरेकोदाहरणम् । दृष्टान्तनिदर्शनेन व्याप्ततया पक्षे हेतूपसंहारवाक्यमुपनयः । सोऽपि द्विविधः । अन्वयव्यतिरेकभेदात् । तथा धूमवानित्यन्वयोपनयः । अयं च न तथा निर्धूम इति व्यतिरेकोपनयः । हेतुपूर्वकं पक्षे साध्योपसंहारवाक्यं निगमनम् । इदमपि द्विविधं तथैव । यथा तस्मादग्निमानित्यन्वयेन निगमनम् । तस्मादयं निरग्निर्न भवतीति व्यतिरेकेण । एवं पञ्चावयववादिनो नैयायिकाः ।

---

घातः । अप्रसिद्धे च साध्ये तदभावव्याप्तिर्दुर्ग्रहा । प्रतियोगिप्रमितिं विनाऽभावप्रमितेरयोगात् । नन्वस्त्वेवं भावसाध्यकस्थले । पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वादित्याद्यभावसाध्यकस्थले त्वभावाभावस्य भावरूपत्वेन तस्य च भावस्य प्रतियोगिप्रमितिं विनाऽपि सिद्धत्वात्तद्व्याप्तिः सुग्रहैवेति चेद्भ्रान्तोऽसि । व्यतिरेकस्य भावात्मत्वेऽपि व्यतिरेकव्याप्तिकथनावस्थायां साध्याभावरूपतया कथनमवश्यंभावि । यदितरेभ्यो न भिद्यते तद्गन्धवदत्र भवतीति हि व्यतिरेकव्याप्तिकथनम् । अन्यथा साध्यप्रतिभटत्वाभावे व्यतिरेकव्यवहारानुपपत्तेः । ननु शब्दः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितः, शब्दत्वादित्यत्र साध्यस्य द्रव्याश्रितत्वरूपसामान्यरूपेण प्रसिद्धिरस्त्येव । शब्दः क्वचिदाश्रितो गुणत्वादित्यनुमानेन तत्सिद्धेरिति चेन्न । सामान्यरूपेण प्रसिद्धिसत्त्वेऽपि साध्यतावच्छेदकरूपेण प्रसिद्ध्यभावात् । धूमवह्निसंबन्धप्रतिपत्तौ पदार्थत्वेन तयोः प्रतीतेरतन्त्रत्वात् ।

नैयायिका इति । अयं हि तेषामाशयः । प्रतिज्ञावाक्यमन्तरेण न हेतुवाक्यप्रयोगः कर्तव्यः । अन्यथा हेतुत्वाप्रतीतेः । नापि हेतुप्रयोगमन्तरेणोदाहरणप्रसङ्गः । उदाहरणवाक्यस्य हेतुसाध्ययोर्व्याप्तिप्रदर्शनात्मकत्वात् । उदाहरणमन्तरेण च नोप-

---

१ घ. 'स इत्य' । २ क. ख. 'त । यथा ।

प्रतिज्ञाहेतूदाहरणरूपत्र्यवयववादिनो मीमांसकाः। उदाहरणोपनयरूपावयवद्वयवादिनः सौगताः। अस्माकं त्वनियमः। क्वचित्पञ्चावयवः। क्वचित्त्र्यवयवः। क्वचिद्द्व्यवयवः। उदाहरणोपनयाभ्यामेव व्याप्तिपक्षधर्मयोः सिद्धत्वात्। तावतैवानुमित्युपपत्तेश्च। मृदुमध्यमकठोरधियां विस्तरसंग्रहाभ्यां व्यवहार उपपद्यत इत्यनियम एव। एवं पञ्चावयवसंयुक्तः सद्धेतुरेव वह्न्यनुमापकः। सद्धेतुरित्युक्तत्वाद्धूमसदृशधूलीपटलान्न वह्न्यनुमितिः।

अन्ये हेतुवद्भासमाना हेत्वाभासाः। ते चासिद्धविरुद्धानैकान्तिकप्रकरणसमकालात्ययापदिष्टभेदेन पञ्चप्रकाराः। तत्रासिद्धस्त्रिविधः—स्वरूपासिद्ध आश्रयासिद्धो व्याप्यत्वासिद्धश्चेति। स्वरूपासिद्धो यथा—अनित्यो जीवश्चाक्षुषत्वाद्घटवदिति। आश्रयासिद्धस्तु व्योमारविन्दं सुरभि, अरविन्दत्वात्सरोजारविन्दवदिति। व्योमारविन्दमाश्रयः। स चासिद्धः। व्याप्यत्वासिद्धो द्विविधः—एको व्याप्तिग्राहकप्रमाणाभावादपरस्तूपाधिसद्भावात्। आद्यो यथा यत्सत्तत्क्षणिकमिति। क्षणिकत्वसत्त्वयोर्व्याप्तिग्राहकप्रमाणासिद्धेः। द्वितीयो यथा—अग्नीषोमीया हिंसा अधर्मसाधिका, हिंसात्वात् क्रतुबाह्यहिंसावदिति। अत्र निषेध्यत्वमुपाधिः। अतो हिंसात्वहेतुः सोपाधिकः। साध्यविपरीतव्याप्तो हेतुर्विरुद्धः। तद्यथा—नित्या प्रकृतिः कृतकत्वात्कालवत्।

---

नयः। उदाहरणेन गृहीतव्याप्तिकस्य हेतोस्तेनैवाऽऽकारेण पक्षधर्मताप्रदर्शनार्थत्वादुपनयस्य। पक्षधर्मतामात्रं हेतुवाक्यार्थो व्याप्तस्य पक्षधर्मत्वमुपनयवाक्यार्थ इति हेतूपनययोर्भेदः। ततो निगमनम्। तच्चाऽऽवश्यकमेव। तस्य विपक्षे बाधकप्रमाणाभावद्योतनार्थमग्निमानेवेति सावधारणसाध्यनिर्देशत्वात्। ततश्च पञ्चावयवयुक्तं वाक्यमेव परिपूर्णोपदेश इति।

त्र्यवयव इति। यद्यप्ययं पक्षः साध्यव्यवस्थापनाभावादनादरणीय एव तथाऽपि बुद्धिमतः साध्यव्यवस्थापनस्य सुलभत्वादत्रोक्त इति बोध्यम्।

हेत्वाभासा इति। व्याप्तिः पक्षधर्मता चेति द्वयमनुमानाङ्गम्। तत्र व्याप्त्यभावेन व्याप्यत्वासिद्धविरुद्धानैकान्तिका हेत्वाभासाः। साधारणानैकान्तिके हेतोर्विपक्षगामित्वेन व्याप्तिविरहः। असाधारणानैकान्तिके तु सपक्षे विद्यमानेऽपि हेतोः पक्षमात्रवृत्तित्वेन व्याप्तिप्रदर्शनाभावाद्व्याप्तिविरहः। पक्षधर्मताया अभावेन स्वरूपासिद्धाश्रयासिद्धौ हेत्वाभासौ। प्रकरणसमे तु पक्षे साध्यनिश्चयावसादनेन व्याप्तिभङ्ग इति

---

१ क. °वयवाभ्या°। २ घ. °न्ये तु हे°। ३ घ. °निषिद्धत्व°।

कृतकत्वं हेतुः साध्याभावव्याप्तः[1]। सव्यभिचारोऽनैकान्तिकः। स च द्विविधः साधारणोऽसाधारणश्चेति। पक्षसपक्षविपक्षवृत्तिः साधारणः। यथा शब्दो नित्यः प्रमेयत्वात्कालवत्। असाधारणस्तु विपक्षसपक्षव्यावृत्तः। यथा भूमिर्नित्या गंधवत्त्वादिति। प्रकरणसमस्तु साध्यविपरीतसाधकहेत्वन्तरवान्। यथेश्वरोऽनित्यः। नित्यधर्मरहितत्वात्। ईश्वरो नित्योऽनित्यधर्मरहितत्वादिति। अयमेव सत्प्रतिपक्षः। कालात्ययापदिष्टो यथा—यस्य हेतोः साध्याभाववान्पक्षः स कालात्ययापदिष्टः। यथाऽग्निरनुष्णः, पदार्थत्वाज्जलवत्। अयं च प्रत्यक्षेणोष्णत्वावधारणाद्बाधितः।

एवमनुमाने निरूपिते उपमानादेरनुमानादावन्तर्भावः। यथाऽतिदेशवाक्यार्थस्मरणसहकृतगोसादृश्यविशिष्टपिण्डज्ञानमुपमानम्। गवयपदजानन्नपि यथा

केचित्। स्वारसिकसंदेहापवादिनाऽपि विपरीतनिश्चयप्रसङ्गेन बाधतुल्यत्वमापाद्य पक्षधर्मताभङ्ग इत्यन्ये। व्याप्तिपक्षधर्मत्वयोर्द्वयोरपि विमर्देनेनोभयदोषापादनमितीतरे। कालात्ययापदिष्टे तु साध्यशून्ये साधनवृत्त्या व्याप्तिभङ्ग इति केचित्। सिद्धसाधनवत्साध्यसंदेहाभावात्पक्षधर्मत्वभङ्ग इत्यपरे। प्रकरणसमस्त्विति। अयं च संदिग्धः। साध्यविपरीतसाधकहेत्वन्तरदर्शनेनायं हेतुः स्वसाध्यं साधयितुमीष्टे न वेति संदेहोदयात्। अत एवायं प्रकरणसम इत्युच्यते। प्रकरणेन पक्षेण समस्तुल्यः। पक्षो हि साध्यवान्न वेति संदिह्यत इति तदर्थं प्रयुक्तो हेतुरप्यत्र स्वसाध्यं साधयितुमीष्टे न नेति संदिह्यत एवेत्युभयोः समत्वं बोध्यम्। ननु संदेहस्यानुमानाङ्गत्वात्तदुत्थापकस्यास्य कथं हेत्वाभासत्वमिति चेद् भ्रान्तोऽसि। द्विविधा खलु संदेहप्रवृत्तिः। एका स्वारसिकी सर्वानुमानसाधारणी। द्वितीया पुनः प्रतिकूलानुमानदर्शनजनिता। तत्र प्रथमैवानुमानाङ्गम्। न तु द्वितीया। शङ्कापनोदनप्रवृत्तपूर्वानुमानपरिपन्थिरूपेणानुमानान्तरेण प्रवर्तितत्वात्तस्या इति बोध्यम्। कालात्ययापदिष्ट इति। कालस्य साधनकालस्यात्ययेऽभावेऽपदिष्टः प्रयुक्तो हेतुः कालात्ययापदिष्टः। अकालप्रयुक्त इति यावत्। अयमेव बाधितसाध्यक इत्युच्यते।

अतिदेशवाक्येति। अतिदेशवाक्यं च त्रिप्रकारम्। तत्र प्रथमं गोसदृशो गवय इति साधर्म्योपमाने। तत्स्मरणसहकृतं यद्गोसादृश्यविशिष्टपिण्डज्ञानं तदेवोपमितिकरणम्। द्वितीयं च गवादिवद्द्विशफो न भवत्यश्व इति वैधर्म्योपमाने। तत्र च गोविसदृशपिण्डज्ञानमुपमितिकरणम्। तृतीयं च दीर्घग्रीवः प्रलम्बोष्ठः कठोरकण्टकाशी पशुः क्रमेलक इत्यसाधारणधर्मोपादाने। तत्र च तादृशासाधारणधर्मविशिष्टपिण्डज्ञा-

[1] घ. °सः। साध्याभावव्याप्तो हेतुर्विरुद्धः। ख°।

गौस्तथा गवय इति कुतश्चिदारण्यकपुरुषाद्वाक्यं श्रुत्वा वनं गतो वाक्यार्थं स्मरन्यदा गोसादृश्यविशिष्टपिण्डं पश्यति तदा तद्वाक्यार्थस्मरणसहकृतगोसादृश्यवि-शिष्टपिण्डज्ञानं जायते तदुपमानमित्युच्यते। स्मरणरूपत्वात्तस्य प्रत्यक्षेऽन्तर्भावः। व्याप्तिग्रहणापेक्षत्वादनुमानेऽन्तर्भावः। वाक्यजन्यत्वाच्छब्दे चान्तर्भावः।

अर्थापत्तिर्नाम दिवाऽभुञ्जानस्य पुरुषस्य पीनत्वदर्शनाद्रात्रौ भोजनं कल्प्यते। एतस्यानुमानेऽन्तर्भावः। तर्को नाम व्याप्याङ्गीकारेण व्यापकप्रस-ञ्जनम्। तद्यथा पर्वतोऽग्निमान्धूमवत्त्वादित्यनुमाने धूमोऽस्तु वह्निर्माऽस्त्वित्युक्ते यदि वह्निर्न स्यात्तर्हि धूमोऽपि न स्यादित्येतस्य प्रमाणानुग्राहकत्वम्।

---

नमुपमितिकरणम्। शब्दे चान्तर्भाव इति। यथाऽयं गौरिति व्यक्तिविशेषे गोश-ब्दव्युत्पादनेऽपि वक्त्रभिप्रायमालोच्य न्यायानुसारेण सार्वत्रिकीं गोशब्दव्युत्पत्तिं प्रतिपद्यन्ते बालाः। न हि बुद्धिमन्तो यावदुक्तमेव गृह्णन्ति। तथाऽतिदेशवाक्येऽपि बुद्धिमन्तः श्रोतारो न्यायानुसारेण गोसादृश्यादिचिह्नोन्नीते गवयत्वादौ व्युत्पद्यन्ते। नन्वतिदेशवाक्यश्रवणकाले गवयत्वादेरप्रत्यक्षत्वात्कथं शाब्दज्ञानमिति चेन्न। अर्थप्र-त्यक्षस्य शाब्दज्ञानेऽतन्त्रत्वात्। अन्यथा तैस्तैर्लक्षणैरिन्द्रोपेन्द्रादिशब्दानां व्युत्पत्तिर्न स्यात्। तदभावे वैदिकवाक्यार्थाप्रतिपत्तावनुष्ठानं न स्यादिति बहुव्याकुली स्यात्। मायावादिनस्तु नगरेषु दृष्टगोपिण्डस्य पुरुषस्य गवयेन्द्रियसंनिकर्षे सति भवति प्रती-तिरयं पिण्डो गोसदृश इति। तदनन्तरं च भवत्यनेन सदृशी मदीया गौरिति निश्चयः। इयमेवोपमितिरित्याहुः। तन्न। अनुमानेऽन्तर्भावात्। तथा च प्रयोगः—गौर्गवयस-दृशो गवयस्थसादृश्यप्रतियोगित्वात्। यो यद्गतसादृश्यप्रतियोगी स तत्सदृशः। यथा वामहस्तो दक्षिणहस्तेनेति।

एतस्येति। तथा च प्रयोगः—देवदत्तो रात्रिभोजी दिवाऽभुञ्जानत्वे सति पीनत्वात्। जीवी देवदत्तो गृहे नेत्यत्र बहिः सत्त्वमप्यनुमानादेव सिध्यति। जीवन्देवदत्तो बहिरस्ति विद्यमानत्वे सति गृहेऽसत्त्वादिति। एवमेव सर्वत्र बोध्यम्।

तदुक्तम्—

'अनियम्यस्य नायुक्तिर्नानियन्तोपपादकः' इति।

अनियम्यस्याव्याप्यस्य नायुक्तिर्नानुपपद्यमानता। अनियन्ताऽव्यापको नोपपादक इत्यर्थः। तथाच व्याप्तिरेव नामान्तरेणानुपपत्तिरित्युच्यत इति नार्थापत्तिः प्रमाणान्तर-मिति भावः। प्रमाणानुग्राहकत्वमिति। यदि वह्निर्न स्यात्तर्हि धूमोऽपि न स्यात्।

---

१ क. ख. 'वाक्याच्छ्रुत्वा। २ घ. 'गोसदृशवि'। ३ घ. 'ब्दे वाऽन्त'। ४ घ. 'तो वह्निमा-न्धूमादिति स्थले धूमो'।

तर्कानुगृहीतप्रमाणपूर्वकत्वावधारणं निश्चयः। वीतरागकथा वादः। पक्षद्वयसाधनवती विजिगीषुकथा जल्पः। स्वपक्षस्थापनहीना तु वितण्डा। अविवक्षितशब्दार्थारोपेण दूषणं छलम्। स्वव्याघि दूषणं जातिरसदुत्तरं जातिरिति

---

स्याच्चेत्कार्यकारणभावभङ्गः स्यादिति तर्कः। स च यत्र धूमस्तत्र वह्निरिति व्याप्तौ कथितायां 'धूमोऽस्तु नाम परं तत्र वह्निना कथमवश्यं भवितव्यम्' इति यदि शङ्का समागच्छेत्तत्तादृशशङ्कापसारणद्वाराऽनुमानमनुगृह्णातीति बोध्यम्। तर्कश्च पञ्चविधः। आत्माश्रयान्योन्याश्रयचक्रकानवस्थाकेवलानिष्टप्रसङ्गभेदात्। प्रतिबन्दीति तु केवलानिष्टप्रसङ्गस्यैवावान्तरभेदः। तर्कान्तरमिति केचित्। दुस्तर्कस्तु त्याज्य एव। दुस्तर्कावलम्बिनः कथायामनधिकारात्। वीतरागकथेति। परस्परविरुद्धवादिनोर्व्यवहारः कथेति कथासामान्यलक्षणम्। सा च कथा त्रिविधा—वादजल्पवितण्डाभेदात्। वादे प्रमाणतर्कौ साधनम्। वीतरागोऽधिकारी। तत्त्वज्ञानं प्रयोजनम्।

तदुक्तम्—

'तत्र प्रमाणतर्काभ्यां साधनाक्षेपसंयुता।
वीतरागकथा वादस्तत्फलं तत्त्वनिर्णयः' इति॥

जयार्थी जल्पाधिकारी। अत एव स न वीतरागः। उभयोरपि वादिनोः साधनवत्त्वे जल्पः। अन्यतरस्य स्वपक्षसाधनवत्त्वे परस्य दूषणमात्रशरणत्वे वितण्डा। केचित्तु वीतरागवितण्डा विजिगीषुवितण्डेति वितण्डाद्वैविध्यमाहुः। तस्यायमाशयः-स्वपक्षसाधनं परपक्षदूषणं साधनसमर्थनं दूषणसमर्थनं शब्ददोषवर्जनमिति पञ्चाङ्गो वादः। एकस्मिन्वादे वादिप्रतिवादिनावधिकारिणौ। वीतरागकर्तृकवादद्वयसमुच्चयेन वीतरागकथारूपो वादः प्रवर्तते। विजिगीषुकर्तृकवादद्वयसमुच्चयेन विजिगीषुकथारूपो जल्पः प्रवर्तते। तत्र यथा जल्पार्धेनैकेनैव वादेन विजिगीषुवितण्डा तथा वादार्धेनैकेनैव वादेन वीतरागवितण्डेति। वितण्डायामपि वादिप्रतिवादिव्यवस्थानुपालनं कर्तव्यमेव। सर्वत्रैव प्रमाणतैः स्वपक्षसाधनादि कर्तव्यत्वेन कल्पितम्। छलजातिनिग्रहस्थानादि त्वकर्तव्यत्वेन कल्पितम्। तत्र च्छलमाह—अविवक्षितेति। यथा नवकम्बलोऽयं देवदत्त इति नूतनकम्बलाभिप्रायेण प्रयुक्ते वाक्ये तत्राविवक्षितो यो नवत्वसंख्याविशिष्टोऽर्थस्तमारोप्य कश्चिद्दूषयति। नास्य नवकम्बलाः सन्ति दरिद्रत्वात्। न ह्यस्य द्वित्वमपि संभाव्यते कुतो नवेति। स्वव्याघीति। यत्परस्य दूषणं दीयते तत्स्वस्याप्यायातीत्यर्थः। असदुत्तरमिति। उत्तरस्यासत्त्वं स्वव्याघातकत्वम्। यथा पर्वतो वह्निमान्धूमान्महानसवदित्यत्र यद्ययं पर्वतो धूमवत्त्वेन महानससाधर्म्याद्वह्निमान्स्यात्तर्हि द्रव्यत्ववत्त्वेन ह्रदसाधर्म्याद्वह्न्यभाववानेव वा किं न स्यादिति। अत्र च वह्न्यभावसाधनेऽनयैव रीत्या महानससाधर्म्येण वह्निमत्त्वमपि सिध्यतीत्यस्य

वा ।.पराजयहेतुर्निग्रहस्थानमित्येषामनुमानाङ्गत्वादनुमानेऽन्तर्भावः । क्वचित्क्वचिन्नैयायिकमतानुसारेणोक्तमिति न विरोधः । इत्यनुमानं निरूपितम् ॥

इति श्रीवाधूलकुलतिलकश्रीमन्महाचार्यस्य प्रथमदासेन श्रीनिवासदासेन विरचितायां यतीन्द्रमतदीपिकायामनुमाननिरूपणं नाम द्वितीयोऽवतारः ॥ २ ॥

---

## अथ तृतीयोऽवतारः ।

---

अनुमाननिरूपणानन्तरं शब्दो निरूप्यते—अनाप्तानुक्तवाक्यजनिततदर्थविज्ञानं शाब्दज्ञानम् । तत्करणं शब्दप्रमाणम् । अनाप्तानुक्त इत्युक्तत्वाद्वेदस्य पौरुषेयत्वमतनिरासः । करणदोषबाधकप्रत्ययाभाववद्वाक्यं वा । सर्गादौ भगवांश्चतुर्मुखाय पूर्वपूर्वक्रमविशिष्टान्वेदान्स्मृत्वास्मृत्वोपदिशतीत्युक्त्या वेदस्य नित्यत्वमपौरुषेयत्वं च सिद्धमिति करणदोषाभावो बाधकप्रत्ययाभावश्च ।

---

स्वव्याघित्वं स्वव्याघातकत्वं च बोध्यम् । सा च साधर्म्यसमादिभेदेन चतुर्विंशतिप्रकारेति गौतमसूत्रे ( १ । १ । १ ) स्पष्टम् । दूषणासमर्थमप्यसिद्ध छलं, सिद्धमपि दूषणासमर्थं जातिरिति च्छलजात्योर्भेदः । निग्रहस्थानमिति । निग्रहस्य खलीकारस्य स्थानं ज्ञापकमित्यर्थः । यथा—शब्दोऽनित्यः प्रत्यक्षगुणत्वादित्युक्ते परेण सोऽयं गकार इत्यादिप्रत्यभिज्ञाबलाद्बाध उद्भावितेऽस्तु तर्हि नित्यः शब्द इति नित्यत्वं स्वीकुर्वन्वादी प्रतिज्ञा जहाति । तच्च निग्रहस्थानं प्रतिज्ञाहान्यादिभेदेन द्वाविंशतिविधम् । तत्तल्लक्षणानि तु गौतमसूत्रे ( १ । २ । १ ) ज्ञेयानि ॥

इति श्रीयतीन्द्रमतदीपिकाप्रकाशे द्वितीयोऽवतारः ॥ २ ॥

---

अथ तृतीयोऽवतारः ।

---

अनाप्तेति । मन्वद्वयं परित्यज्याऽऽप्तोक्तवाक्यजनिततदर्थविज्ञानमित्युक्तौ तु वेदस्याऽऽप्तोक्तत्वसिद्धये तस्य पौरुषेयत्वं स्वीकार्यं स्यात् । करणेति । करणदोषो बाधकप्रत्ययश्चेत्येतदुभयाभावविशिष्टमित्यर्थः । अत्रायं प्रयोगः—वेदः प्रमाणं, करणदोषबाधकप्रत्ययरहितत्वे सति वाक्यत्वात्सप्रतिपन्नवाक्यवत् । अपौरुषेयत्वात्करणदोषग-

---

१ प. तत्स्वार' ।

ननु वेदवाक्यानां मीमांसकैः कार्यपरतयैवं प्रामाण्यस्वीकारात्सिद्धब्रह्म-परवाक्यानां व्युत्पत्त्यसंभवाच्च कथं प्रामाण्यमिति चेन्न । सिद्धब्रह्मपरवाक्यानामप्युपासनान्वयस्वीकारात्। पिता ते सुखमास्त इति लोकसिद्धपरवाक्यस्यापि बोधकत्वदर्शनाद्बालानां लोके मातृपितृप्रभृतिभिरम्बातातमातुलचन्द्रा-

---

हित्वम् । बाधकप्रत्ययोऽपि नास्ति । स ह्यनुमानाद्वा श्रुतेर्वा स्मृतेर्वा लौकिकवाक्याद्वा । नाऽऽद्यः । तादृशानुमानस्यैवाऽऽगमबाधितत्वेनाप्रमाणत्वात् । न द्वितीयः । तथा सति वेदप्रामाण्यं गले पतितमेव स्यात् । न तृतीयः । तस्या वेदमूलकत्वेन तद्बाधकत्वात् । नापि चतुर्थः । तस्यालौकिकविषये प्रवृत्त्यभावात् । तथा च वेदप्रामाण्यं सिद्धम् । न च संदिग्धार्थबोधकत्वरूपं ज्ञानानुत्पादकत्वरूपं वाऽप्रामाण्यं शङ्कनीयम् । सूक्ष्मदृशा तथाऽनुपलब्धेः । न च वेदेष्वद्भुतोक्तीनामप्रामाण्यमेवेति वाच्यम् । न हि वेद एवाद्भुतदृष्टिः । किंतु लोकेऽपि । यथोलूकादीनामन्धकारेऽपि रूपदर्शनम् । मान्धालादीनामाहारनिर्हारकरणयोरेकस्थानवर्तित्वम् । व्यालानां चक्षुःश्रवस्त्वम् । पक्षिषु च केषु चिदङ्गाराहारवत्त्वम् । मत्स्यकूर्मविहङ्गानामीक्षणध्यानसंस्पर्शैः पुत्रपोषणम् । नालिकेरद्वीपवासिनामपकालेनैव देहधारणमित्यादि ।

कार्यपरतयैवेति । वृद्धयोर्व्यवहरतोरेकतरवृद्धप्रयुक्तशब्दश्रवणसमनन्तरजनितान्यतरवृद्धसमवेतचेष्टां दृष्ट्वाऽन्यथाऽनुपपत्त्युन्नीयमाना शब्दशक्तिस्तदुत्पादककार्यपर्यवसायिन्येवावसीयते । तदुक्तम्—

> 'कार्ये मानान्तरापूर्वे समस्तं वैदिकं वचः ।
> प्रमाणमिति हि प्राज्ञा मन्यन्ते मान्यबुद्धयः ॥
> पदानां तत्परत्वेन व्युत्पत्तेरवधारणात् ।
> न खल्वन्यपरे शब्दे व्युत्पत्तेरस्ति संभवः ' ॥

इति । उपासनान्वयेति । यद्यपि ब्रह्म सिद्धरूपं तथाऽप्युपासनायाः कार्यत्वेन तस्याश्चाऽऽत्मा वाऽर इत्यादिवेदान्तवाक्येषु प्रतिपादितत्वेन तेषां प्रामाण्यमक्षतमेवेति भावः । अधिकं समासोक्तौ प्रथमसूत्रशेषेऽनुसंधेयम् । पितेति । केन चित्पुरुषेण हस्तचेष्टादिना 'पिता ते सुखमास्ते' इति देवदत्ताय ज्ञापयेति प्रेषितो यज्ञदत्तस्तज्ज्ञापने प्रवृत्तः 'पिता ते सुखमास्ते' इति शब्दं प्रयुङ्क्ते । पार्श्वस्थोऽन्यो व्युत्पित्सुर्मूकचेष्टाविशेषज्ञस्तज्ज्ञापने प्रवृत्तं यज्ञदत्तमनुगतस्तज्ज्ञापनाय प्रयुक्तमिमं शब्दं श्रुत्वाऽयं शब्दस्तदर्थबुद्धिहेतुरिति निश्चिनोतीति कार्यार्थ एव शक्तिरित्याग्रहो निर्मूल इति बोध्यम् । इदं यादृच्छिकव्युत्पत्तौ शब्दस्य सिद्धवस्तुपरत्वं दर्शितम् । अथ बुद्धिपूर्वकव्युत्पत्तौ तद्दर्शयति—बालानामिति । माघादिर्हि पुरोवर्तिनं पशुं निर्दिश्य 'अयं गौः'

---

१ प. 'व प्रमाणत्वस्वी' । २ प नाग्लद्यावान्व' । ३ प. 'ति लौकिक' ।

दिष्वङ्गुल्या निर्दिश्य तदभिधायिनः शब्दान्प्रयुञ्जानैः क्रमेण भूयः शिक्षितानां तत्तदर्थबुद्ध्युत्पत्तिदर्शनाद्वेदेऽपि परिनिष्पन्नेऽप्यर्थे शब्दस्य बोधकत्वं संभवतीति नाप्रामाण्यशङ्कावकाशः । तर्ह्यभिचारादिप्रतिपादकवेदांशस्य कथं प्रामाण्यमिति न शङ्कनीयम् । तस्य दृष्टफलदर्शनेनादृष्टस्वर्गादिफलसाधनादौ प्रवृत्तिप्रयोजकत्वात् । यूपादित्यवाक्यं स्वादित्यवद्यूपप्रकाशनपरम् । अतः कृत्स्नस्य वेदस्य प्रामाण्यम् ।

स वेदः कर्मब्रह्मप्रतिपादकपूर्वोत्तरभागाभ्यां द्विधा भिन्नः । आराधनकर्मप्रतिपादकं पूर्वकाण्डम् । आराध्यप्रतिपादकमुत्तरकाण्डम् । उभयोर्मीमांसयोरैकशास्त्र्यम् । भागद्वयात्मको वेद ऋग्यजुःसामाथर्वरूपेण चतुर्धाऽवस्थितः । पुनरनन्तप्रकारश्च । ऋगादिबहुप्रकारवान्वेदो मन्त्रार्थवादविधिरूपेण त्रिविधः । अनुष्ठेयार्थप्रकाशको मन्त्रः । विध्यधीनप्रवृत्त्युत्तम्भकवाक्यविशेषोऽर्थवादः ।

---

इति वाक्यं प्रयुङ्क्ते । एवं बहुशः शिक्षितो व्युत्पित्सुर्बालो यदा गोशब्दं शृणोति तदा स गोशब्द एव स्वस्वरूपेण श्रोतुस्तस्य तादृशपशुबुद्धिमुत्पादयति । ततोऽस्य पशोर्गोशब्दस्य च कश्चन संबधोऽस्तीति सोऽवधारयति । तत्र च जन्यजनकभावादीनामितरसंबन्धानामसंभवात्स्वाभाविको बोध्यबोधकभाव एव संबन्ध इति शब्दार्थसंबन्धग्रहणप्रकारो लोके प्रसिद्ध एव । अभिचारादीति । अभिचारो मारणम् । शत्रुवध इत्यर्थः । तत्प्रदिपादको वेदश्च ' श्येनेनाभिचरन्यजेत ' इत्यादिः ।

स वेद इति । वेदसामान्यलक्षणं तु अलौकिकोपायबोधकत्वम् । इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेद इति तदर्थात् । पूर्वोत्तरेति । पूर्वभागः ' अग्निमीळे ' ' इषे त्वोर्जे त्वा ' इत्यादिः । उत्तरभाग उपनिषद्रूपः । ऐकशास्त्र्यमिति । उभयत्रापि धर्मस्यैव प्रतिपाद्यमानत्वात् । अलौकिकं श्रेयःसाधनं हि धर्मः । स च साध्यरूपः क्रियादिः पूर्वभागेन प्रतिपाद्यते । सिद्धस्तु ब्रह्मरूपो धर्म उत्तरभागेन प्रतिपाद्यते । सिद्धरूपे वस्तुनि धर्मशब्दप्रयोगो महाभारते दृश्यते । यथा—

' ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः ।
ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् ' ॥

इति । ऋग्यजुरिति । पादेनार्धेन चोपेता वृत्तबद्धा मन्त्रा ऋचः । वृत्तगीतिवर्जितत्वेन प्रश्लिष्टपठिता मन्त्रा यजूंपि । गीतिरूपा मन्त्राः सामानि । एतन्मिश्रितोऽथर्ववेदः । एवं चातुर्विध्येऽप्यथर्ववेदस्य त्रिष्वन्तर्भूतत्वेन वस्तुतस्त्रैविध्यमेवेति त्रयीशब्देनापि तस्य प्रसिद्धिरिति बोध्यम् । मन्त्रेति । प्रयोगसमवेतार्थस्मारको मन्त्रः । यथा—अग्निमीळे ' इत्यादिः । विध्यधीनप्रवृत्तीति । प्रवृत्तिपदं निवृत्तेरप्युपलक्षणम् ।

---

१ घ. °भायकश° । २ ख. °फलाद° ।

हितानुशासनवाक्यमिह विधिः। स च त्रिविधः—अपूर्वपरिसंख्यानियमभेदात्। ते पुनर्नित्यनैमित्तिककाम्यादिभेदाद्बहुविधाः। व्रीहीन्प्रोक्षतीत्यपूर्वविधिः। मनोमयत्वाद्युपासनविधिर्विशिष्टविधिः। इमामगृभ्णान्नित्यश्वरशनाविधिः परिसंख्याविधिः। गुर्वभिगमनविधिर्नियमविधिः। संध्योपासनादिविधिर्नित्यविधिः। जातेष्ट्यादिविधिर्नैमित्तिकविधिः। ज्योतिष्टोमादिविधिः काम्यविधिः।

एवं विध्यर्थवादमन्त्रात्मकस्य वेदस्य च्छन्दः कल्पः शिक्षा निरुक्तं ज्योतिषं व्याकरणमित्येतान्यङ्गानि। छन्दोऽनुष्टुप्त्रिष्टुबादि[1]। श्रौतस्मार्तप्रतिपादनपरः कल्पः। शिक्षा वर्णात्मिका। निरुक्तं पूर्वार्थप्रतिपादकम्। ज्योतिषमध्ययनतदर्थानुष्ठानकालनिर्णयात्मकम्। व्याकरणं तु शब्दस्वरादिसमर्थनपरम्। एवं साङ्गस्य वेदस्य प्रामाण्यं सिद्धम्।

---

उत्तम्भकः साधकः। अयं च विधिनिषेधान्यतरशेषभूतः। प्राशस्त्यनिन्दान्यतरपरं वाक्यमर्थवाद इति यावत्। यथा—'वायुर्वै क्षेपिष्ठा देवता' (तै० सं० २।१।१) इत्यादि, 'सोऽरोदीत्' (तै० सं० १।५।१) इत्यादि च। आद्ये 'वायव्यं श्वेतमालभेत भूतिकामः' इति विहितश्वेतपश्वालम्भनस्य प्रशंसा। अन्त्ये 'ऋत्विग्भ्यो रजतं न देयम्' इति निषिद्धस्य रजतदक्षिणादानस्य निन्दा। प्रकारान्तरेण पुनस्त्रिविधः—गुणवादोऽनुवादो भूतार्थवादश्चेति। तदुक्तम्—

'विरोधे गुणवादः स्यादनुवादोऽवधारिते।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः'॥

इति। आदित्यो यूप इति गुणवादः। अग्निर्हिमस्य भेषजमित्यनुवादः। वज्रहस्तः पुरंदर इति भूतार्थवादः। परकृतिपुराकल्पावप्यर्थवादविशेषावेव। अन्यकर्तृकस्य व्याहृतस्य विधेर्वादः परकृतिः। ऐतिह्यसमाचरितो विधिः पुराकल्पः। पुराकल्पे ह्येवमासीदित्यादिः। अपूर्वेति। कालत्रयेऽपि कथमप्यप्राप्तस्य प्राप्तिफलको विधिरपूर्वविधिः। कथमपीत्यस्य दृष्टार्थत्वेनादृष्टार्थत्वेन वेत्यर्थः। यथा व्रीहीन्प्रोक्षतीति। नात्र व्रीहीणां प्रोक्षणस्य संस्कारकर्मणो विनियोगं विना मानान्तरेण कथमपि प्राप्तिरस्ति। विशिष्टविधिरप्यपूर्वविधिरेव। क्वचिद्विशिष्टविधौ सामान्यरूपेण प्राप्तावपि विशेषरूपेण कथमप्यप्राप्तिरेव। परिसंख्येति। सर्वत्र प्राप्तस्य क्वचिद्विधिरितरनिवृत्तिफलकः परिसंख्याविधिः। इमामगृभ्णन्निति मन्त्रो रशनाग्रहणप्रकाशनरूपाल्लिङ्गादेव प्राप्नोतीति 'अश्वाभिधानीमादत्ते' इति न तत्प्राप्त्यर्थो विधिः। किं तु गर्दभरशनाग्रहणेऽपि मन्त्रः प्राप्नुयादिति तन्निवृत्त्यर्थः। नियमविधिरिति। पक्षप्राप्तस्याप्राप्तांशपरिपूरणफलको विधिर्नियमविधिः।

---

१ ग. 'मन्त्रादिवि°'। २ घ. °दिप्रतिपादनरूपम्। श्रौ°। ३ घ. 'इत्कमपू°। ४ ख. घ. 'तु मुख'।

अथ श्रुत्यविरुद्धाचारव्यवहारप्रायश्चित्तादिप्रतिपादकाप्तप्रणीता स्मृतिः प्रमाणम्। हिरण्यगर्भादीनामाप्तत्वेऽपि तेषां गुणत्रयावश्यकत्वसंभवात्तत्कर्तृकयोगकपिलादिस्मृतीनां मन्वादिस्मृत्यविरुद्धांश एव प्रमाणम्। तत्त्वविपर्यासादिरुद्धांशोऽप्रमाणम्। वेदोपबृंहणरूपेतिहासपुराणयोरपि प्रामाण्यं स्वतः सिद्धम्। तत्र भारतरामायणयोः क्वचिद्विरोधभानेऽपि तत्त्वांशे वेदान्तवाक्यवदविरोधो ज्ञेयः। सर्गादिपञ्चप्रतिपादकपुराणेष्वपि सात्त्विकराजसतामस-

---

वेदोपबृंहणेति। तदुक्तम्—

'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति'॥

इति। उपबृंहणं नाम विदितसकलवेदतदर्थानां स्वयोगमहिमसाक्षात्कृतवेदतत्त्वार्थानां वाक्यैः स्वावगतवेदवाक्यार्थव्यक्तीकरणम्। सकलशाखानुगतस्य वेदवाक्यार्थस्याल्पभागश्रवणाद्दुरवगमत्वेन तेन विना निश्चयायोगादुपबृंहणं हि कार्यमेवेति श्रीमाष्यकृद्भिः प्रतिपादितम्। स्वतः सिद्धमिति। मूलभूतश्रुत्यनुमानादेवेत्यर्थः। सर्गादीति। तदुक्तम्—

'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंश्यानुचरितं चैव पुराणं पञ्चलक्षणम्॥'

इति। तच्च त्रिविधम्—सात्त्विकराजसतामसभेदात्। तदुक्तं पद्मपुराणे—

'वैष्णवं नारदीयं च तथा भागवतं शुभम्।
गारुडं च तथा पाद्मं वाराहं शुभदर्शने॥'
सात्त्विकानि पुराणानि विज्ञेयानि शुभानि वै॥
ब्रह्माण्डं ब्रह्मवैवर्तं मार्कण्डेयं तथैव च।
भविष्यं वामनं ब्राह्मं राजसानि निबोधत॥
मात्स्यं कौर्मं तथा लैङ्गं शैवं स्कान्दं तथैव च।
आग्नेयं च षडेतानि तामसानि निबोधत'॥

इति। सात्त्विकादिविभागे कारणं मात्स्ये प्रदर्शितम्—

'अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते॥
राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः।
संकीर्णेषु सरस्वत्याः पितॄणां च निगद्यते॥

---

१ ख. ग. 'त्रयवश्यत्व°।

भेदभिन्नेषु तत्त्वांशे विरोधाभावाद्विरुद्धांशोऽप्रमाणमन्यत्सर्वं प्रमाणम् । पाशु॰पताद्यागमा अपि तथैव । आगमादि^१पतन्त्रतन्त्रान्तरसिद्धान्तभेदभिन्नस्य श्रीपञ्चरात्रागमस्य क्वचिदपि वेदविरोधाभावात्कार्त्स्न्येन प्रामाण्यम् ।

---

सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः ।
तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिम् ॥'

इति । अन्यत्सर्वमिति । अन्ये तु श्रुत्यविरोधिनां सात्त्विकानामेव पुराणानामुपा॰देयत्वं न पुनः श्रुतिविरोधिनां राजसानां तामसानां च पुराणानामुपादेयत्वम् । तेषां संसारवर्धनाय भगवत्प्रवर्तितैः पितामहादिभिः प्रवर्तितत्वान्न सात्त्विकपरिग्राह्यत्वम् । यतः श्रुत्युक्तमेवानुसरन्ति सत्त्वोत्तराणि पुराणानि । तामसानि पुनरप्रमाणान्येवेत्याहुः । पाशुपतादीति । अत्र च श्रुतिविरोधभूयस्त्वात्सत्त्वोत्तरस्मृतिपुराणादितुल्यत्वं नास्ति । तथा च क्वचित्सत्त्वोत्तरांशसद्भावेऽपि न सार्वत्रिकविश्वासास्पदत्वमिति भावः । तदुक्तं सूतसंहितायाम्—

'तथाऽपि योंऽशो मार्गाणां वेदेन न विरुध्यते ।
सोंऽशः प्रमाणमित्युक्तः केषां चिदधिकारिणाम् ॥'

इति । आदिना कापिलसंग्रहः । यद्यपि सांख्यस्य 'सांख्यं योगः पाञ्चरात्रम्' इति वेदैः सह कथनं तथाऽपि श्रुतिविरोधे तस्य बाध्यत्वमेव । न हि साधर्म्यमात्रेण वैधर्म्यं नि॰वार्यते । अपामग्निना सह द्रव्यत्वसाधर्म्येण स्पर्शकृतवैधर्म्याभावप्रसङ्गात् । वेदवि॰रोधाभावादिति ।

'पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ।'

इति भगवदभिहितत्वेन कर्तृदोषसंभावनाया अप्यभावाच्च ॥

'पाञ्चरात्रं भागवतं तन्त्रं वैखानसाभिधम् ।
वेदभ्रष्टान्समुद्दिश्य कमलापतिरुक्तवान् ॥'

इत्यत्र वेदभ्रष्टानित्यस्यासंदिग्धवेदार्थज्ञानाभाववत इत्यर्थो बोध्यः । अत एव

'अलाभे वेदमन्त्राणां पञ्चरात्रोदितेन हि ।
आचारेण प्रवर्तन्ते ते मां प्राप्स्यन्ति मानवाः ॥
ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधीयते ।
शूद्रादीनां न तच्छ्रोत्रपदवीमुपयास्यति ॥'

इति वराहपुराणे भगवतोक्तम् । ननु तत्कर्तरि भगवति मा भूद्विभ्रमः । विप्रलिप्सा स्यादेव । दृष्टा हि भगवतोऽपि विप्रलिप्सा—

---

१ प. तत्वावेद ।

एवं वैखानसागमस्यापि।

धर्मशास्त्राणामपि तथैव। शाण्डिल्यपाराशरभरद्वाजवसिष्ठहारीतादयो धर्मशास्त्रप्रणेतारः। शिल्पायुर्वेदगान्धर्वभरतादिकमप्युपयुक्तांशे तथैव। शिल्पो नाम कर्षणादिगोपुरप्राकारनिर्माणादिप्रतिपादकः। आयुर्वेदो वैद्यकम्। गान्धर्वो नाम गानादिनिरूपकः। भरतागमो नृत्यादिनिरूपकः। पुनश्चतुःषष्टिकलारूपेषु शास्त्रेषु तत्त्वोपायपुरुषार्थोपयुक्तानि प्रमाणानि। यक्तुलाभर-

'त्वं हि रुद्र महाबाहो मोहशास्त्राणि कारय।

इत्यादौ सिपाघ्यनसत्त्वमशुभानित्यादौ चेति चेन्न। द्विधा खलु भगवतः प्रवृत्तिः—असुरमोहनार्थमाश्रितसंरक्षणार्थं च। पञ्चरात्रे सत्त्वोत्तरमननसंरक्षणार्थमेव प्रवृत्तिः। अत एव सत्त्वोत्तराः शाण्डिल्यादय एव तच्छास्त्रप्रवक्तारः। अतो नैतच्छास्त्रं विप्रलिप्सामूलकम्। न च साङ्गेषु वेदेषु निष्ठामलभमानः शाण्डिल्यः पञ्चरात्रतन्त्रमधीतवानिति वेदाच्छैद्यवचनं पञ्चरात्रस्य वेदविरोधस्यापकमिति वाच्यम्। शाण्डिल्यस्य पञ्चरात्रशास्त्राभ्यासपर्यन्तं वेदवाक्यादर्थप्रतिपत्तिर्विशदा नाभूदिति तत्तात्पर्यात्। यथा भूमविद्योपक्रमे तद्विद्याप्रशंसार्थमृग्वेदं भगवोऽध्येमीत्यादिना कृत्स्नस्यापि वेदस्यानादरेण ज्ञानहेतुत्वाभावमुक्त्वा भूमविद्याया एव ज्ञानहेतुत्वं स्वी क्रियते। नैतावता भूमव्यतिरिक्तविद्यानिन्दा। अपि तु भूमविद्याप्रशंसैव। तद्वदत्रापीति बोध्यम्। न च 'वासुदेवात्संकर्षणो नाम जीवो जायते' इति पञ्चरात्रोक्ता जीवोत्पत्तिर्वेदविरुद्धेति वाच्यम्। शरीराद्यभिप्रायेण तथोक्तेः। 'यतो वा इमानि भूतानि जायन्ते' ( तै. उ. ३।१।१ ) इतिवत्। एवमिति। वैखानसागमस्यापि साक्षाद्भगवदुक्तत्वात्कात्स्न्येन प्राामाण्यमिति भावः।

चतुःषष्टिकलेति। चतुःषष्टिकलाश्च शैवतन्त्रोक्ताः श्रीमद्भागवतटीकायां ( द. पू. अ. ४५ श्लो. ३६) श्रीधरस्वामिभिर्निर्दिष्टाः। तथा हि—गीतम् १ वाद्यम् २ नृत्यम् ३ नाट्यम् ४ आलेख्यम् ५ विशेषकच्छेद्यम् ६ तण्डुलकुसुमबलिप्रकाराः ७ पुष्पास्तरणम् ८ दशनवसनाङ्गरागाः ९ मणिभूमिकाकर्म १० शयनरचनम् ११ उदकवाद्यम् १२ उदकघातः १३ चित्रयोगाः १४ माल्यग्रथनविकल्पाः १५ शेखरापीडयोजनम् १६ नेपथ्ययोगाः १७ कर्णपत्रभङ्गाः १८ सुगन्धयुक्तिः १९ भूषणयोजनम् २० ऐन्द्रजालम् २१ कौचुमारयोगाः २२ हस्तलाघवम् २३ चित्रशाकापूपभक्ष्यविकारक्रिया २४ पानकरसरागासवयोजनम् २५ सूचीकर्म २६ सूत्रक्रीडा २७ प्रहेलिका २८ प्रतिमाला २९ दुर्वचकयोगाः ३० पुस्तकवाचनम् ३१ नाटकाख्यायिका-

१ क. ख 'दिविशायर्थः। २ शङ्कराचार्यदेव नामान्तरमेतत्।

णादिसूरिसूक्तयः कात्स्न्येन प्रमाणतराः । श्रीमद्रामानुजाचार्यप्रभृतिभिः प्रणीताः श्रीभाष्यादिप्रबन्धाः प्रमाणतमाः । पुरुषस्वातन्त्र्याधीनरचनाविशेषविशिष्टं पौरुषेयम् । एतेन काव्यनाटकालंकारादीनामपि लक्षणमुक्तं स्यात् । एवमाकाङ्क्षायोग्यतासंनिधिमल्लौकिकवाक्यान्यपि प्रमाणानि । यथा नद्यास्तीरे पञ्च फलानि सन्तीत्यादीनि ।

एवं वैदिकलौकिकसाधारणं द्विविधम्—मुख्यवृत्तिगौणवृत्तिभेदात् मुख्यवृत्तिरभिधावृत्तिः। यथा सिंहशब्दस्य मृगेन्द्रे । साऽभिधावृत्तिर्योगरूढ्यादिभेदवशाद्बहुविधा । मुख्यार्थबाधे सति तदासन्नेऽर्थे वृत्तिरौपचारिकी । सा द्विधा—लक्षणागौणीभेदात् । प्रथमा यथा—गंगायां घोष इत्यत्र घोषा-

दर्शनम् ३२ काव्यसमस्यापूरणम् ३३ पट्टिकावेत्रबाणविकल्पाः ३४ तर्ककर्माणि ३५ तक्षणम् ३६ वास्तुविद्या ३७ रूप्यरत्नपरीक्षा ३८ धातुवादः ३९ मणिरागज्ञानम् ४० आकरज्ञानम् ४१ वृक्षायुर्वेदयोगाः ४२ मेषकुक्कुटलावकयुद्धविधिः ४३ शुकसारिकाप्रलापनम् ४४ उत्सादनम् ४५ केशमार्जनकौशलम् ४६ अक्षरमुष्टिकाकथनम् ४७ म्लेच्छितकुतर्कविकल्पाः ४८ देशभाषाज्ञानम् ४९ पुष्पशकटिकानिमित्तज्ञानम् ५० यन्त्रमातृकाधारणमातृका ५१ संवाच्यम् ५२ मानसी काव्यक्रिया ५३ अभिधानकोशः ५४ छन्दोज्ञानम् ५५ क्रियाविकल्पाः ५६ छलितकयोगाः ५७ वस्त्रगोपनानि ५८ द्यूतविशेषः ५९ आकर्षक्रीडा ६० बालक्रीडनकानि ६१ वैनायिकानाम् ६२ वैजयिकानाम् ६३ वैतालिकानां च विद्यानां ज्ञानम् ६४ इति । एवमाकाङ्क्षेति। आकाङ्क्षा चैकपदार्थज्ञाने तदर्थान्वययोग्यार्थस्य यज्ज्ञानं तद्विषयेच्छा । सा च पुरुषनिष्ठाऽपि विषयभूतेऽर्थे आरोप्यते। तादृशाकाङ्क्षारहितार्थबोधकं वाक्यमप्रमाणम्। यथा गौरश्वः पुरुषो हस्तीत्यादि । योग्यता च परस्परान्वयप्रयोजकधर्मवत्त्वम् । तेनाग्निना सिञ्चतीति वाक्यमप्रमाणम् ।[1] अग्नौ सेकान्वयप्रयोजकद्रवद्रव्यत्वयोग्यताया अभावात् । प्रकृतान्वयबोधानुकूलपदाव्यवधानं सनिधिः । तेन गिरिर्भुक्तमग्निमान्देवदत्तेनेति वाक्यमप्रमाणम् । तथैव प्रहरे प्रहरेऽसहोच्चारितानि गामानयेत्यादिपदानि न प्रमाणानीति बोध्यम् ।

योगरूढ्यादीति । आदिना योगरूढिसंग्रहः । तत्र शास्त्रकल्पितावयवार्थनिरूपिता शक्तिर्योगः । यथा पाचकादौ । शास्त्रकल्पितावयवार्थभानाभावे समुदायार्थनिरूपितशक्ती रूढिः । यथा मणिनूपुरादौ । शास्त्रकल्पितावयवार्थान्वितविशेष्यभूतार्थनिरूपिता शक्ति-

१ ग 'मूक्तयः । २ घ 'मासिनेोच्चारितान्याराद्दुक्ष'

धिकरणस्थं घोषाचीरं लक्षणा। द्वितीया यथा—सिंहो देवदत्त इत्यत्र देवदत्ते शौर्यादिगुणयोगः।

एवं वैदिकलौकिकरूपं सर्वं वाक्यजातं सविशेषविषयकं भेदविषयकं च। शरीरवाचकशब्दानां यथा शरीरिणि पर्यवसानम्, एवं भगवच्छरीरभूतब्रह्मरुद्रादीन्द्रादिचिद्वाचकशब्दानां तथा शरीरभूतप्रकृतिकालाकाशप्राणाद्यचिद्वाचकशब्दानां शरीरिणि परमात्मनि श्रीनारायणे पर्यवसानमुपपादयन्त्याचार्याः। वेदान्तज्ञानाद्व्युत्पत्तिः पूर्वत इत्युक्तम्। नारायणस्य सर्व-

---

योगरूढिः। यथा पङ्कजादौ। यौगिकरूढिरपि चतुर्थी वृत्तिरस्तीत्येके। महायोगश्याऽपि काचिद्वृत्तिरस्तीत्यन्ये।

सविशेषेति। शब्दस्य हि द्विधा प्रवृत्तिः। पदरूपेण वाक्यरूपेण च। तत्र प्रकृतिप्रत्यययोगेन पदत्वम्। यथा पाचक इति। अत्र 'पच्' इति प्रकृतेः पचनमर्थः। ण्वुल्प्रत्ययस्य च कर्तृरूपोऽर्थः। तयोः संबन्धेन पाचकशब्दात्पचनकर्तृत्वं यद्बुध्यते स एव विशेष इति प्रथमतः पदमेव तावत्सविशेषवस्तुप्रतिपादकं भवतीति तत्समुदायरूपस्य तत्तत्पदार्थसंसर्गरूपवाक्यार्थप्रतिपादकस्य वाक्यस्य सविशेषवस्तुप्रतिपादकत्वमवर्जनीयमेव। अत एव च वाक्यस्य भेदविषयकत्वमपि सिद्धं भवति। सर्वत्र विशेषणयुक्तवस्तुनोर्धर्मधर्मिणोर्भेदेनैव प्रतीयमानत्वात्। एतेन 'तत्त्वमसि' (छां. ६।८।७) इत्यादिवाक्यानि निर्विशेषाद्वितीयब्रह्मरूपवस्तुप्रतिपादकानीति मायावाद्युक्तमपास्तम्। नन्वेवं तत्त्वमसीत्यत्र तत्त्वंपदार्थयोः सामानाधिकरण्यं कथमुपपद्यते। तथा 'इदं सर्वं यदयमात्मा' (बृ. २।४।६) इत्यत्रापीति चेत्तत्राऽऽह—शरीरवाचकेति। अयं देवोऽयं मनुष्य इत्यादौ देवादिशब्दा न केवलजीववाचकाः। किं तु शरीरवाचकाः। शरीररहितानां जीवानां साम्येन तेषु देवत्वादिप्रयोजकभेदकधर्माभावात्। तत्रापि न केवलशरीरवाचकाः। किं तु तेषां शरीरिणि पर्यवसानम्। अन्यथा देवो मनुष्यः सुखी दुःखीत्यादिप्रयोगासंगतेः। शरीरस्य सुखादिवैशिष्ट्याभावात्। सर्वत्र शब्दार्थनिर्णये प्रयोग एव शरणम्। वेदेऽपि 'पञ्चदशरात्रा देवत्वं गच्छन्ति' इत्यादिप्रयोगा दृश्यन्ते। न हि यज्ञकर्तॄणां शरीरत्वप्राप्तिः। तदुक्तं सर्वार्थसिद्धौ—अपृथक्सिद्धविशेषणत्वमेव व्यवहारनियमे तन्त्रम्। अस्ति चापृथक्सिद्धत्वं शरीरिणा शरीरस्येति। एवमिति। तथा च जीववाचकानां जडवाचकानां

---

१ ख. ग. 'प्रकृति'।

शब्दवाच्यत्वं सर्वशरीरकत्वमित्यादिकं सूपरीश्वरनिरूपणे प्रतिपादयिष्यामः। इति शब्दो निरूपितः॥

इति श्रीवाधूलकुलतिलकश्रीमन्महाचार्यस्य प्रथमदासेन श्रीनिवासदासेन विरचितायां यतीन्द्रमतदीपिकायां शब्दनिरूपणं नाम तृतीयोऽवतारः॥ ३॥

## अथ चतुर्थोऽवतारः।

प्रमाणनिरूपणानन्तरं प्रमेयं निरूप्यते—प्रकर्षेण मेयं प्रमेयम्। तच्च द्विविधम्—द्रव्याद्रव्यभेदात्। द्रव्यमुपादानम्। अवस्थाश्रयमुपादानम्।

ननु द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्त पदार्था इति मतान्तरस्थैः सप्तधा परिगणनात्कथं द्रव्याद्रव्यभेदेन द्वेधा समर्थनमिति चेदुच्यते—उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनभेदात्कर्म पञ्चधाऽवस्थितमिति कल्पने गौरवाच्चलनात्मकं कर्मेत्येकधैवोपपत्तेस्तस्यापि संयोगप्रादायैवोप-

च शब्दानां तत्तद्विशेषणविशिष्टपरमात्मपर्यन्तार्थप्रतिपादकत्वेन नोक्तश्रुत्युक्तसामानाधिकरण्यानुपपत्तिरिति बोध्यम्॥

इति श्रीयतीन्द्रमतदीपिकाप्रकाशे तृतीयोऽवतारः॥

## अथ चतुर्थोऽवतारः।

द्रव्याद्रव्येति। ननु द्रव्यसिद्धावेवाद्रव्यसिद्धिः। अद्रव्यस्य द्रव्यप्रतियोगित्वेन द्रव्यासिद्धावसिद्धेः। तथा द्रव्यमप्यद्रव्यसिद्धिपूर्वकमेव। अवस्थाश्रयत्वं द्रव्यत्वमिति हि द्रव्यलक्षणं वाच्यम्। तच्च न सम्भवति। अवस्थाया अद्रव्यत्वेनाद्रव्यासिद्धाववस्थाया अनिरूपणात्। तथा चान्योन्यसापेक्षत्वाद्द्रव्यमद्रव्यमिति द्वयमपि न सिध्यतीति, चेन्मैवम्। किं द्रव्याद्रव्ययोरुपलम्भानुपपत्तिरन्योन्यापेक्षयोच्यते, व्यवहारानुपपत्तिर्वा। न तावदुपलम्भानुपपत्तिः। एकस्मिन्नेव क्षणे विशेषणविशेष्ययोरेकज्ञानग्रहणयोग्ययोर्विशेषणविशेष्यभावेनोपलम्भात्। नापि व्यवहारानुपपत्तिः। व्यवहारो हि व्युत्पत्त्यधीनः। व्युत्पत्तिश्च द्रव्याद्रव्यशब्दयोर्युगपज्जायत एव। युगपदेवोपलभ्यमानयोराधाराधेययोरनयोरनुक्रमाद्द्रव्याद्रव्यशब्दौ वाचकाविति। तथा च द्रव्याद्रव्यशब्दयोर्व्युत्पत्तौ व्यवहारे प्रतीतौ च परस्परपौर्वापर्याभावान्न काऽप्यनुपपत्तिः।

गौरवादिति। तत्तद्दिग्भेदेन दशविधत्वस्यापि प्रसङ्गाच्चेत्यपि बोध्यम्। संयोगप्रादायेति। यो हि संयोगः कर्मजन्यतयाऽभ्युपेयते स एव तादृशकर्महेतुतयाऽभ्यु-

१ क. ख. °य उपा°।

पत्तेः संस्थानमेव जातिरिति संस्थानातिरेकिसामान्यानङ्गीकारात्समवायस्य समवायान्तराङ्गीकारेऽनवस्थानात्तस्यापि संयुक्तविशेषणतयैवोपपत्तेर्जीवेश्वरयोरणुत्वविभुत्वादिविभाजकधर्ममन्तरेण 'विशेष' इति किंचित्पदार्थाङ्गीकारे

---

पगतैः प्रयत्नादृष्टादिभिर्जन्यताम्। न तु मध्ये कर्म। गौरवात्। न हि मध्ये किमपि विशदमुपलभ्यते। येन गौरवपरिहारः स्यात्। तथा च संयोग एव कर्म। ननु तथात्वे भूतलघटयोः संयोगो यावदुपलभ्यते तावद्घटश्चलतीति व्यवहारः कुतो न भवतीति चेन्न। संयोगसंतानैरन्तर्यप्रतीतेश्चलतीति व्यवहारहेतुत्वाङ्गीकारेणादोषात्। यथा भ्रमणे सत्यपि प्रतिक्षणं न भ्रमतीति व्यवहारः किं तु निरन्तरतयाऽनुसंधीयमानेष्वेव क्षणेषु तथैवात्रेति बोध्यम्। न च कर्मणा संयुज्यत इति पृथग्व्यपदेशाद्भेदसिद्धिरिति वाच्यम्। तत्र कर्मशब्दस्य पूर्वसंयोगविश्लेषार्थकत्वात्। संस्थानमेवेति। तदुक्तं श्रीभाष्ये—संस्थानातिरेकिणोऽनेकेष्वेकाकारबुद्धिबोध्यस्यादर्शनात्तावतैव गोत्वादिजातिव्यवहारोपपत्तेरतिरेकवादेऽपि संस्थानस्य संप्रतिपन्नत्वाच्च संस्थानमेव जातिः, इति। संस्थानमवयवसंनिवेशः। किं चानुवृत्तधीरेव सर्वत्र जातिसद्भावे प्रमाणमिति वदद्भिः सर्वशरीरेषु शरीरत्वजातिः कुतो न स्वी क्रियते। पृथिवीत्वादिना सांकर्यादिति चेद्घटत्वमपि तथैवास्तु। तस्यापि पृथिवीत्वादिना सांकर्यात्। सुवर्णस्य तैजसत्वेन पृथिवीत्वाभाववति सुवर्णघटे घटत्वस्य विद्यमानत्वात्। समवायस्येति। समवायो हि न प्रत्यक्षः। अपृथक्सिद्धयोर्वस्तुनोः स्वरूपाद्भिन्नस्य समवायाख्यसंबन्धस्यानुपलभ्यमानत्वात्। ननु घटत्वविशिष्ट इत्यादिव्यवहारानुपपत्त्या स कल्प्यत इति चेत्समवायविशिष्टव्यवहारानुपपत्त्या पुनरपि समवायान्तरं कल्प्यमित्यनवस्था स्यात्। अथैतदनवस्थापरिहारार्थं घटघटत्वाभ्यामिव समवायः स्वभावादेव संबध्यत इत्युच्यते तर्हि घटघटत्वे एव स्वभावान्मिथः संबध्येताम्। किं चैवं ज्ञानार्थयोरपि विषयविषयिभावादिकं स्वभावातिरेकेण समवायवदन्यदेव संबन्धान्तरं कल्प्यं स्यात्। तथा च संयुक्तविशेषणतैव समवायो नान्यत्पदार्थान्तरमिति भावः। जीवेश्वरयोरिति। अणुत्वादयो धर्मा एव विशेषा नान्यत्पदार्थान्तरम्। गौरवात्। यद्यपि समेषु जीवेषु मिथो विभाजकधर्माः स्वाभाविका न सन्ति तथाऽपि देशकालजातिगुणाकारादिभेदैरौपाधिकाः सन्त्येव। मुक्तानामपि भूतपूर्वैरमुक्तदशाया विद्यमानैरुपलक्षणतयाऽवस्थितैर्भेदो ज्ञातुं शक्यते। योगिनश्चामुं भेदं जानन्त्येव। ननु समानजातीयत्वादिविशेषणविशिष्टा मुक्तात्मानः परमाणवश्च परस्परव्यावर्तकधर्मवन्तो द्रव्यत्वाद्घटादिवदित्यनुमानेन विशेषसिद्धिरिति वाच्यम्। पृथक्त्वेन सिद्धसाधनात्। यदि पृथक्त्वस्वरूपैकजात्या क्रोडीकृतैः पृथक्त्वैर्वस्तूनामितरेतरव्यावर्तनं न स्यादित्युच्यते तर्हि विशेषेष्वपि तुल्यम्। तेषाम विशेषत्वरूपैकोपाधिक्रोडीकृतत्वात्। किं च कल्प्यमानस्य विशेषस्य न क्वाप्युपयोगः

गौरवादतः कर्मसामान्यविशेषसमवायानां पृथग्द्रव्यत्वेनानङ्गीकाराच्च द्रव्यमद्रव्यमिति द्विविधो विभाग उपपद्यते ।

एतेनाभावः सप्तमपदार्थ इत्यपि निरस्तम् । अभावस्य भावान्तररूपत्वात् । प्रागभावो नाम पूर्वावस्थापरम्परा । प्रध्वंसाभावो नामोत्तरावस्थापरम्परा । अत्यन्ताभावान्योन्याभावौ तु धर्म्यन्तरस्वरूपावेव । एतस्य प्रत्यक्षेऽन्तर्भावः पूर्वमुक्तः । उपादानं द्रव्यमित्युक्तम् । गुणाश्रयो द्रव्यमिति सामान्यलक्षणं संभवति ।

तानि च द्रव्याणि षट्—प्रकृतिकालशुद्धसत्त्वधर्मभूतज्ञानजीवेश्वरभेदात् । तत्र जडाजडरूपयोर्विभक्तयोर्मध्ये जडलक्षणमुच्यते—अमिश्रसत्त्वरहितं जडम् । तद्द्विविधम्—प्रकृतिकालभेदात् । तत्र सत्त्वरजस्तमोरूपगुणत्रयाश्रयरूपा प्रकृतिः ॥

---

तथाहि—न तावदीश्वरस्य भेदधियमुत्पादयन्ति विशेषाः । तद्धियो नित्यत्वात् । नाप्यस्माकम् । विशेषाणामस्मद्दृश्यत्वाभावात् । नापि योगिनाम् । तेषां सर्वज्ञत्वेन तत्तद्रूपेण सर्ववस्तुप्रकाशोऽस्त्येवेति विशेषानुपयोगात् । पृथक्त्वेन सिद्धेश्चेति ।

अभावस्येति । यो देशकालादिभेदो वस्तुस्वभावनियामकः स एव लाघवादभावव्यवहारस्यापि नियामकोऽस्तु । किमतिरिक्ताभावकल्पनेन । अनुपलब्धेश्च । न च रूपादीनामप्याश्रयव्यतिरेकेणानुपलम्भात्त्यागप्रसङ्ग इति वाच्यम् । तेषामनन्यथासिद्धबुद्धिसिद्धत्वात् । अभावस्य तु भावविशेषैरेवान्यथासिद्धत्वेन त्यागः समुचित एव । अथ भावस्य कथमभावत्वमिति चेद्भवतोऽपि कथमभावाभावस्य भावत्वमिति विभावय । प्रागभाव इति । अतिरिक्तप्रागभाववादिनोऽपि क्वचित्प्रागभावस्य भावरूपत्वमावश्यकमेव । घटध्वंसस्य यः प्रागभावः स घटरूपो घटप्रागभावरूपश्चेति द्विप्रकार इति तेनैवोक्तत्वात् । एवमेव प्रध्वंसाभावेऽपि । घटप्रागभावस्य यो ध्वंसः स घटरूपो घटध्वंसरूपश्चेति । धर्म्यन्तरस्वरूपौ । अधिकरणस्वरूपौ ।

प्रकृतीति । एकस्यापि कालस्यावस्थाभेदेन क्षणादिभेद इत्यवस्थाश्रयत्वरूपद्रव्यलक्षणस्य नाव्याप्तिः । अवस्थाश्चात्रोपाधिसंबन्धमात्ररूपा इत्यन्यत् । ज्ञानस्यापि संकोचविकासरूपावस्थाश्रयत्वमस्त्येव । जीवस्यापि शरीरद्वारा बाल्याद्यवस्थाश्रयत्वं प्रसिद्धमेव । परमात्मनोऽपि सूक्ष्मोऽव्यक्तादिदेहः स्थूलरूपेण परिणमतीति तद्द्वाराऽवस्थाश्रयत्वमस्त्येवेति न दोषः । जडाजडेति । जडत्वं च परत एव भासमानत्वम् । प्रकृतिरिति । बद्धचेतनानां ज्ञानानन्दयोस्तिरोधायकत्वं विपरीतज्ञानजनकत्वं चास्या एव । इयमेवेश्वरस्य क्रीडासाधनभूता देशभेदेन कालभेदेन च सदृशासदृशविकारोत्पादिका च । तत्र सत्त्वं ज्ञानं सुखं तदुभयसङ्गं च जनयति । रजो रागतृष्णासङ्गान्कर्मसङ्गं च जनयति । तमो

---

१ ख. 'स्या भावप' । २ घ. यो वा द्र° । ३ घ. 'गुणाश्रया प्र° ।

सा नित्याऽक्षराविद्यामायाशब्दवाच्या च । तस्यां भगवत्संकल्पाधीन-गुणवैषम्यात्कार्योन्मुखावस्थाऽव्यक्तशब्देनोच्यते । तस्मान्महानुत्पद्यते । स महान्सात्त्विकराजसतामसभेदात्त्रिधाऽवस्थितः । महतोऽहंकार उत्पद्यते । सोऽपि सात्त्विकाहंकारो राजसाहंकारस्तामसाहंकारश्चेति त्रिविधो मतः। एतेषां त्रयाणां वैकारिकस्तैजसो भूतादिरिति नामान्तराण्यपि संभवन्ति। तेषु वैकारिक इति प्रसिद्धाद्राजसाहंकारसहकृतात्सात्त्विकाहंकारादेकादशेन्द्रियाणि जायन्ते।

सात्त्विकाहंकारोपादानकं द्रव्यमिन्द्रियमितीन्द्रियलक्षणम्। इन्द्रियं द्विविधम्—ज्ञानेन्द्रियं कर्मेन्द्रियं चेति। ज्ञानप्रसरणशक्तमिन्द्रियं ज्ञानेन्द्रियम्। तत्षोढा—मनःश्रोत्रचक्षुर्घ्राणरसनात्वग्भेदात्। स्मृत्यादिकरणमिन्द्रियं मनः। तच्च हृदयदेशवृत्ति बुद्ध्यहंकारचित्तादिशब्दवाच्यं बन्धमोक्षहेतुभूतं च। शब्दादिपञ्चके शब्दमात्रग्रहणशक्तमिन्द्रियं श्रोत्रम्। तन्मनुष्यादीनां कर्णशष्कुल्यवच्छिन्नप्रदेशवृत्ति। द्विजिह्वानां नयनवृत्ति। एवं रूपमात्रग्रहणशक्तमिन्द्रियं चक्षुः। तस-

---

विपरीतज्ञानमनवधानमालस्यं निद्रां च जनयतीति तत्त्वत्रय उक्तम्। अक्षरेति। नित्यत्वं ज्ञानविरोधित्वं विचित्रसृष्टिकरत्वं च यथाक्रममक्षरादिशब्दवाच्यत्वे हेतुः। तस्मान्महानिति। अव्यक्तावस्थाऽव्यवहितोत्तरावस्थाविशिष्टमहंकारावस्थाऽव्यवहितपूर्वावस्थाविशिष्टं द्रव्यं महान्। एवमुत्तरत्रापि। त्रिधेति। गुणत्रयाश्रयादव्यक्तात्सत्त्वादिगुणोन्मेषभेदेन त्रिधा महानुत्पद्यत इति भावः। अहंकार इति। अयमेव देहात्माभिमानादिजनकः। राजसाहंकारसहकृतादिति। अस्य सहकारित्वं नामेन्द्रियहेतोः सत्त्वांशस्य चलनस्वभावेन रजसा प्रेरकेण प्रवर्तनम्।

इन्द्रियलक्षणमिति। शरीरसंयुक्तं ज्ञानकरणमतीन्द्रियमिन्द्रियमिति परोक्तलक्षणं कर्मेन्द्रियेष्वव्याप्तम्। मनःश्रोत्रेति। मनसः कर्मेन्द्रियत्वं तु न। तस्य ज्ञानद्वारैव कर्महेतुत्वात्। तावतैव कर्मेन्द्रियत्वे चक्षुरादावप्यतिप्रसङ्गः। मानसं कर्मेति व्यवहारे तु कर्मशब्दः शुभाशुभसंकल्पादिरूपज्ञानवाचीति बोध्यम्। हृदयदेशवृत्तीति। इन्द्रियान्तराणामपि हृत्प्रदेश एव कन्दस्थानम्। स्थानान्तरेष्वपि तेषां यथासंभवं वृत्तिः। तदुक्तं भाष्ये—हृदयस्थानां चेन्द्रियाणां तत्तन्नाडीभेदैस्तत्तत्प्रदेशविशेषप्रसर्पात्तत्र तत्र कार्यकरत्वमिति। आत्मनोऽपि हृत्प्रदेशे भूयसा वृत्तिः। बुद्ध्यहंकारेति। तथा च भाष्यम्—अध्यवसायाभिमानचिन्तारूपवृत्तिभेदान्मन

येषां नयनवृत्ति। गन्धमात्रग्रहणशक्तमिन्द्रियं घ्राणम्। नासाग्रवृत्ति। रसमात्रग्रहणशक्तमिन्द्रियं रसनेन्द्रियम्। जिह्वाग्रवृत्ति। स्पर्शमात्रग्रहणशक्तमिन्द्रियं त्वगिन्द्रियम्। सर्वशरीरवृत्ति। नखदन्तकेशादिषु प्राणमान्द्यतारतम्यात्स्पर्शानुपलम्भः। श्रोत्रादीन्द्रियाणां भौतिकत्वप्रतिपादनं भूताप्यायितृत्वेनौपचारिकम्। एतेषां विषयसंबन्धः क्वचित्संयोगः क्वचित्संयुक्ताश्रयणमिति वृद्धसंप्रदायः।

उच्चारणादिष्वन्यतमक्रियाशक्तत्वं कर्मेन्द्रियसामान्यलक्षणम्। तच्च वाक्पाणिपादपायूपस्थभेदात्पञ्चधाऽवस्थितम्। वर्णोच्चारणकरणमिन्द्रियं वाक्। तद्धृत्कण्ठजिह्वामूलतालुदन्तोष्ठनासामूर्धरूपस्थानाष्टकवृत्ति। मूगादिष्वदृष्टविर-

---

एव बुद्ध्यहंकारचित्तशब्दैर्व्यपदिश्यत इति। भौतिकत्वेति। यत्तु वैशेषिका अनुमानेन भौतिकत्वं साधयन्ति। तथाहि—त्वगिन्द्रियं वायवीयम्। रूपादिषु मध्ये स्पर्शमात्राभिव्यञ्जकत्वात्। स्वेदशैत्याभिव्यञ्जकपवनवत्। चक्षुरिन्द्रियं तैजसम्। रूपादिषु मध्ये रूपमात्राभिव्यञ्जकत्वात्। दीपप्रभावत्। रसनेन्द्रियमाप्यम्। रूपादिषु मध्ये रसमात्राभिव्यञ्जकत्वात्। दन्तान्तर्गततोयवत्। घ्राणेन्द्रियं पार्थिवम्। रूपादिषु मध्ये गन्धमात्राभिव्यञ्जकत्वात्। कुङ्कुमगन्धाभिव्यञ्जकघृतवदिति। तच्चिन्त्यम्। व्यञ्जकत्वं किं व्यक्तिं प्रति करणत्वं हेतुत्वमात्रं वा। नाऽऽद्यः। स्वरूपासिद्धेः। यस्मिन्सत्यविलम्बेन कार्योत्पत्तिस्तस्य करणत्वेनेन्द्रियसंयोगस्य करणत्वेऽपीन्द्रियाणामकरणत्वात्। नान्त्यः। इन्द्रियाधिष्ठानतत्संस्कारादिभिर्व्यभिचरितत्वात्। भूताप्यायितृत्वेनेति। पोषकत्वेनेत्यर्थः। शरीरविनाशे च तत्स्थानीन्द्रियाणीन्द्रियाप्यायकैर्भूतैरंशतो हीयन्ते शरीरान्तरे पुनरापूर्यन्त इति भावः। अत एव—

आप्यायन्ते च ते नित्यं तदवस्थैस्तु पञ्चभिः।

इति मोक्षधर्म उक्तम्। एतेषामिति। तदुक्तं तत्त्वरत्नाकरे—

तत्र वृद्धा विदामासुः संयोगं संनिकर्षणम्।
संयुक्ताश्रयणं चेति यथासंभवमूह्यताम्॥

इति। तत्र वाय्वादिचतुष्टयं यथायोग्यं संयोगसंबन्धेन गृह्यते। स्पर्शादयस्तु संयुक्ताश्रयणसंबन्धेनेति विवेकः।

---

१ क. °न्धम°।

द्वात्तदभावः। शिल्पादिकरणमिन्द्रियं पाणिः। स च मनुष्यादीनामङ्गुल्यादिवृत्तिः। वारणादीनां नासावृत्तिः। संचरणकरणमिन्द्रियं पादः स च मनुष्यादीनां चरणवृत्तिः। भुजगपतङ्गादीनामुरःपक्षादिवृत्तिः। मलादित्यागकरणमिन्द्रियं पायुः। स च तत्तदवयववृत्तिः। आनन्दविशेषकरणमिन्द्रियमुपस्थः। स च मेहनादिवृत्तिः। एतानीन्द्रियाण्यणूनि। परकायप्रवेशे लोकान्तरगमनादिषु च जीवेन सह गमनमिन्द्रियाणाम्। मुक्तिदशायामप्राकृतदेशगमनासंभवादिहैव यावत्प्रलयं स्थितिः। करणविधुरैरन्यैः परिग्रहो वा। कर्मेन्द्रियाणां शरीरनाशान्नाश इति पक्षस्तु भाष्यविरोधेनं नेयः। एतेन पुरुषेन्द्रियप्,

---

अङ्गुल्यादिवृत्तिरिति। ननु तालुपादादिभिरपि मौक्तिकग्रथनलिपिकरणादिशिल्पदर्शनात्तत्राप्येतदिन्द्रियवृत्तिरङ्गीकार्येति चेत्सत्यम्। तत्रांशतो वृत्तिरस्त्येव। न हीन्द्रियाणां मिथो विरोधः। इन्द्रियान्तरव्याप्ते देश इन्द्रियान्तरावस्थानस्य चक्षुःस्पर्शनादौ दर्शनात्। तत्तदवयवेति। मान्धालादीनां तु मुखादिवृत्तिः। तेषामास्येनैव विण्मूत्रविसर्गात्। अणूनीति। अणुत्वं चैषामुपलब्ध्ययोग्यपरिच्छिन्नपरिमाणत्वमात्रम्। सह गमनमिति। अणुत्वादेवोपपद्यत इति शेषः। 'त एते सर्व एव समाः सर्वेऽनन्ताः' ( बृ० १।५।१३ ) इत्यानन्त्यश्रुतिस्तु 'अथ यो ह वैताननन्तानुपास्ते' (बृ० १।५।१३ ) इत्युपासनविधानादुपासनफलबाहुल्यविषया। इन्द्रियाणामिति। ननु कर्मेन्द्रियाणां शरीरेण सहोत्पत्तिविनाशौ। न तु शरीरान्तरगमनमिति चेन्न। 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' (बृ० ४।४।२ ) इति श्रुतेः। सर्वशब्देन कर्मेन्द्रियाणामपि संग्रहात्। विना प्रमाणं संकोचे मानाभावात्। 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति' ( बृ० ३।२।१३ ) इति श्रुतौ शरीरनाशेऽपि कर्मेन्द्रियस्यापि वाचश्चक्षुरादीन्द्रियवदविनाशदर्शनाच्च। अत एव भाष्ये सप्तगत्यधिकरणे ( ब्र० सू० २।४।४ ) हस्तादीनां जीवेन सह गमनाभावादनिन्द्रियत्वमाशङ्क्य तेषामिन्द्रियत्वं सिद्धान्तितम्। हस्तादीनि कर्मेन्द्रियाण्यपि जीवेन साकं गच्छन्त्येव न तु विनश्यन्तीति तदाशयः। इहैवेति। मुक्तपरित्यक्तानीन्द्रियाणि केन चित्करणरहितेन जीवेन न गृहीतानि चेत्तेषामिहैव जीवसंबन्धं विनाऽपि प्रलयपर्यन्तं स्थितिः। गृहीतानि चेत्तेन साकमेव। भाष्यविरोधेनेति। इदमनुपदमेवोक्तम्। 'भाष्याविरोधेन ज्ञेयः' इति पाठे यद्यपि कर्मेन्द्रियाणि जीवेन साकं न गच्छन्ति तथाऽपि चक्षुरादीनामिव तेषामपि जीवोपकरणत्वाविशेषादिन्द्रियत्वमस्त्येवेति न तद्भाष्यविरोध इत्यर्थः। अत एव वेदान्तदीपे कर्मेन्द्रियाणि जीवेन साकं न गच्छन्तीत्युक्तम्। पुरुषेन्द्रियमिति। जीवभेदेनेन्द्रिय-

---

१ क. 'भाष्यावि'। २ क. 'न ज्ञेयः।

स्त्रीन्द्रियम्, एकेन्द्रियवादः, त्वगिन्द्रियैकत्वस्वीकार इत्यादिविमतपक्षा निरस्ताः।

राजसाहंकारसहकृताद्भूतादिसंज्ञकतामसाहंकाराच्छब्दादिपञ्चतन्मात्राण्याकाशादिपञ्च महाभूतानि चोत्पद्यन्ते। भूतानामव्यवहितसूक्ष्मावस्थाविशिष्टं द्रव्यं तन्मात्रम्। तदेव भूतोपादानम्। विशिष्टशब्दादिविषयाधिकरणं भूतम्। तन्मात्राणि शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्मात्रमिति पञ्च। भूतानि च तथा—आकाशवायुतेजोऽप्पृथिवीभेदात्। तत्र तामसाहंकाराकाशयोर्मध्यमावस्थाविशिष्टं द्रव्यं शब्दतन्मात्रम्। क्षीरदध्नोरन्तरालपरिणामवत्। तस्मादाकाशो जायते। अस्पर्शवत्त्वे सति विशिष्टशब्दाधारत्वं श्रोत्राप्यायितृत्वं चाऽऽकाशलक्षणम्। स च[3] प्रत्यक्षः शब्दमात्रगुणकोऽवकाशहेतुः। नीलं नभ इति प्रतीतेः पञ्चीकरणप्रक्रियया रूपवांश्च। एतेनाऽऽकाशस्याजन्यत्वनिरासः। सूर्यपरिस्पन्दादिभिराकाशस्यैव प्राच्यादिव्यवहारोपपत्तौ दिगिति न

भेदस्यात्राविवक्षितत्वात्। तथात्वे चेन्द्रियानन्त्यस्यैव वक्तव्यत्वात्। एकेन्द्रियेति। ननु यथैकस्यैव मनसो वृत्तिभेदास्तथैकस्यैवेन्द्रियस्य पञ्च वृत्तयः। तच्चेन्द्रियमन्यद्वा कल्प्यं त्वगिन्द्रियमेव वाऽस्त्विति चेन्न। तथा सति रूपादिप्रकाशनशक्तिनियमो न स्यात्। सर्वत्र शब्दाद्युपलब्धिप्रसङ्गात्।

भूतानामिति। दधिरूपेण परिणममानस्य पयसो मध्यमावस्थावद्भूतरूपेण परिणममानस्य द्रव्यस्य ततः पूर्वा या का चिदवस्था तद्विशिष्टं द्रव्यं तन्मात्रशब्देनोच्यत इत्यर्थः। अस्पर्शवत्त्वे सतीति। इदं पृथिव्यादावतिव्याप्तिवारणाय। कालेऽतिव्याप्तिवारणाय विशिष्टशब्दाधारत्वमिति। प्रत्यक्ष इति। यदोन्मीलनं चक्षुषस्तदैवाऽऽकाशोऽयमिति प्रतीतेः। न च नीरूपस्य कथं चाक्षुषप्रत्यक्षयोग्यतेति वाच्यम्। तत्र नीलरूपस्य सत्त्वात्। किंच त्वन्मते रूपवतोऽपि तदयोग्यत्वप्रसङ्गः। तत्रानुभवानुसारेण योग्यता कल्प्यत इति चेत्तुल्यमाकाशेऽपि। नीरूपस्यापि रूपस्य प्रत्यक्षत्वदर्शनाच्च। न च 'रूपरूपिरूपैकार्थसमवेत' एतदन्यतमत्वं प्रत्यक्षप्रयोजकमिति वाच्यम्। समवायानङ्गीकारेण रूपैकार्थसमवेतत्वस्यानिरूपणात्। रूपैकार्थसम्बद्धत्वं तत्त्वमिति चेदाकाशेऽपि पञ्चीकरणप्रक्रियया तदस्त्येवेति बोध्यम्। अजन्यत्वनिरास इति। नीरूपद्रव्यत्वहेतुना नित्यत्वसाधने स्वरूपासिद्धिः। आकाशे नीलरूपसत्त्वात्। निर-

१ घ. °राले कल्पि°। २ ध. °च द्र°। ३ घ. °ती ते र°।

पृथग्द्रव्यकल्पनम्। दिक्सृष्टिस्त्वन्तरिक्षादिसृष्टिवदुपपद्यते।

आकाशात्स्पर्शतन्मात्रम्। आकाशवाय्वोर्मध्यमावस्थाविशिष्टं द्रव्यं स्पर्शतन्मात्रम्। तस्माद्वायुः। विशिष्टस्पर्शवत्त्वे सति रूपशून्यत्वम्, अस्मदादिस्पर्शनैकेन्द्रियग्राह्यद्रव्यत्वम्, अनुष्णाशीतविशिष्टस्पर्शवत्त्वे सति गन्धशून्यत्वमित्यादिकं वायोर्लक्षणम्। तस्मिन्नानासलिलातपकुसुमाद्यवयवयोगाच्छीतोष्णसौरभादिप्रतीतिः। स च त्वगिन्द्रियाप्यायकत्वेनोपकरोति। तस्य शब्दस्पर्शौ गुणौ। तत्र शरीरधारणादिहेतुर्वायुविशेषः प्राणसंज्ञकः पञ्चप्रकारः प्राणापानव्यानोदानसमानभेदात्। हृदि प्राणः, गुदेऽपानः, सर्वशरीरगो व्यानः, कण्ठ उदानः, नाभिदेशे समानः इति नियमः। जङ्गमेष्विव स्थावरेषु प्राणसंबन्धस्तुल्य एव। स च स्पर्शनप्रत्यक्षः। एतेनानुमेयवादनिरासः।

---

यववत्त्वेहेतुरपि स्वरूपासिद्ध एव। पञ्चीकरणप्रक्रियया सावयवत्वात्। न पृथगिति। ननु संयुक्तसंयोगभूयस्त्वाल्पत्वनिबन्धने परत्वापरत्वे व्यापकद्रव्ययोगमन्तरेण कथं स्यातामिति चेन्न। आकाशसंबन्धेनैव तत्सिद्धेः। कल्प्यमानमपि दिक्तत्वमुपाधियोगेनैव परत्वापरत्वे जनयतीति तादृशोपाधियोगेनाऽऽकाशस्यैव परत्वादिसिद्धौ पर्याप्तत्वात्।

विशिष्टस्पर्शेति। इदं रूपादावतिव्याप्तिवारणाय। पृथिव्यामतिव्याप्तिवारणाय विशेष्यदलम्। वायुविशेष इति। न तु वायुमात्रम्। 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिराप' ( मुं० २।१।३ ) इति सृष्टिवाक्ये वायुप्राणयोः सहपाठात्। नापि वायुक्रिया। प्राणः स्पन्दत इति प्रयोगात्। अत्र प्राणक्रिययोर्भेदेन व्यपदेशात्। स्थावरेषु। लतावृक्षादिषु। मूलनिषिक्तसलिलदोहदपार्थिवधातूनामभ्यादानादिति भावः। नखरोमदन्तकिणादीनामपि मन्दप्राणाश्रयत्वं न्यायतत्त्वे प्रतिपादितम्। स्पर्शनप्रत्यक्ष इति। स्पर्शनप्रत्यक्षे रूपवत्त्वस्याप्रयोजकत्वात्। एतेन पञ्चीकरणप्रक्रियया वायौ रूपसत्त्वेऽपि तस्यानुद्भूतत्वान्न तत्प्रत्यक्षमित्यपास्तम्। अत्रेदं बोध्यम्—वायोः स्वभावाददृष्टात्मेश्वरसंकल्पाद्वा स्वारसिकं तिर्यक्प्रसरणम्। पार्थिवादिद्रव्येण वाय्वन्तरेण वाऽभिघातवशाद्भ्रमणोर्ध्वगमनादयः। ते च दूरस्थेन तृणरज्जुप्रभृतीनां भ्रमणोर्ध्वगमनादिभिरनुमेयाः। तत्रस्थेन तु स्पर्शनग्राह्याः। एतेन वायोर्नानात्वमपि सिद्धम्। अस्य च सर्वतः पार्थिवाप्योपरोधे सति स्तम्भो भवतीति न्यायसिद्धाञ्जने स्पष्टम्।

---

१ घ. °प्राणादिषं°। २ घ. 'ति। ज°। ३ क. ख ग. °भेषु स्था°। ४ क. ख. ग. °षु च प्रा°।

वायुतेजसोर्मध्यमावस्थाविशिष्टं द्रव्यं रूपतन्मात्रम्। तस्मात्तेजः। उष्णस्पर्शवत्त्वभास्वररूपवत्त्वादिकं तेजसो लक्षणम्। तस्य बहिः पचनादिहेतुत्वमग्निसूर्यात्मना। अन्तर्वैश्वानरसंज्ञकजाठराग्निरूपेण। दिवाभीतादिव्यतिरिक्तानां चाक्षुषज्ञान आलोकादिरूपेण सहकारी भवति। तच्चतुर्धा—भौमदिव्यौदर्याकरजभेदात्। तत्र पार्थिवमात्रेन्धनं तेजो भौमम्। तद्दीपादि। जलमात्रेन्धनं दिव्यम्। तत्सूर्यादि। पार्थिवजलेन्धनमौदर्यम्। तज्जाठरम्। निरिन्धनं तेज आकरजम्। तत्सुवर्णादि। सुवर्णस्य द्रव्यान्तरसंसर्गादुष्णस्पर्शाभावः। पुनः सामान्येन प्रभाप्रभावांश्चेति विभक्तः[१]। आवरणसदसद्भावाधीनसंकोचविकासः प्रसारिततेजोविशेषः प्रभा। सा च प्रभावद्भिः सहोत्पद्यते। सह नश्यति। द्रव्यरूपा गुणभूता सावयवा च। अनेन प्रभायाः केवलगुणत्वमतनिरासः। प्रभाविशिष्टं तेजः प्रभावत्। तच्चतुर्विधमिति प्रतिपादितम्। तत्तेजः शब्दस्पर्शरूपगुणवच्च।

तेजःसलिलयोर्मध्यमावस्थाविशिष्टं द्रव्यं रसतन्मात्रम्। तस्मादापः। शीतस्पर्शवत्त्वं निर्गन्धत्वे सति विशिष्टरसवत्त्वमित्याद्यपां लक्षणम्। तासां शुक्लमधुरशीतैकस्वभावानामाश्रयादिसंसर्गभेदाद्रूपरसस्पर्शवैचित्र्यारोपः। ताः समुद्रसरिदादिरूपेण बहुप्रकाराः। शब्दस्पर्शरूपरसवत्यश्च सेचनपिण्डीकरणादिहेतवः।

अप्पृथिव्योर्मध्यमावस्थाविशिष्टं द्रव्यं गन्धतन्मात्रम्। तस्मात्पृथिवी। विशिष्टगन्धवत्त्वं रसवत्त्वे सति विशिष्टस्पर्शवत्त्वमित्यादि पृथिवीलक्षणम्। सा सुरभिर्मधुरा कृष्णादिरूपा चानुष्णाशीतस्पर्शवती। पाकजभेदाद्विचित्रवर्णा विचित्ररसा च।

---

वैश्वानरसंज्ञकेति। वैश्वानरो नाम शरीरान्तर्वर्ती प्राणादिसंयोगादशितपीतपाकादिहेतुस्तेजोविशेषः। द्रव्यान्तरसंसर्गादिति। पञ्चीकृतभूतारब्धव्यष्टिप्रपञ्चे सुवर्णादिषु पार्थिवांशस्य प्रभूतत्वात्। तैजसत्वोक्तिस्त्वितरासाधारण स्वतःशुद्धत्वं स्फुरत्त्वादि चान्वीक्ष्य कृतेति बोध्यम्। द्रव्यरूपेति। प्रभाया न रूपादिवत्केवलगुणत्वम्। स्वाश्रयभूताद्दीपादन्यत्र तत्समीपे देशे प्रभाया विद्यमानत्वात्। रूपवत्त्वादपि तस्या द्रव्यत्वं सिध्यति। गुणभूतेति। नियमेन द्रव्याश्रयत्वाद्द्रव्यशेषत्वाच्चेति भावः। एतेषु च तत्त्वेषु प्रागत एवोत्तरोत्तरसृष्टिः। अन्यथा पृथिव्येकशेषप्रसङ्गात्। पूर्वपूर्वभूतानामुपलम्भादिसिद्धत्वाच्च।

सुरभिरिति। स्वभावत इत्यादिः। विचित्ररसा चेति। क्वचिद्द्रवत्वोपलम्भोऽपि

---

१ घ 'विध प्र'। २ घ. 'रिध्ददादि'। ३ घ. 'दात्तु विचि'।

अस्याश्च मनोघ्राणाप्यायकत्वेनोपकारकत्वम् । मृत्पाषाणाग्नौषधादिबहुप्रकारवती शब्दस्पर्शरूपरसगन्धगुणका धारणहेतुश्च । तमसः पृथिव्यामन्तर्भावः । तद्गुणत्वात्तदवस्थान्तरत्वाद्वा । अत एवाऽऽलोकाभावमात्रं द्रव्यान्तरं चेत्यादिपक्षा निरस्ताः ।

भूतेषु सर्वत्र पञ्चीकरणप्रक्रियया शब्दादीनां गुणानामुपलम्भः । पञ्चीकरणप्रक्रिया तु भगवान्भूतानि सृष्ट्वा, एकैकमेव भूतं द्विधा कृत्य द्वयोर्भागयोः स्वभागमेकं निधाय भागान्तरं चतुर्धा कृत्य तांश्चतुर्भागान्भूतान्तरेषु चतुर्षु योजयति । एवं सर्वेषु भूतेषु क्रियमाणेष्वेकैकस्य

---

सलिलातपादियोगादेव । तद्गुणत्वादिति । तस्याः पृथिव्या गुणो नीलवर्णस्तद्विशिष्टत्वात् । तदवस्थेति । तमसः प्रकृतिविशेषावस्थत्वेन वायुपर्यन्तेषु प्राकृतपदार्थेषु रूपाभावेन तोयतेजसोर्नीलरूपाभावेन च पारिशेष्यात्पार्थिवत्वं सिद्धम् । प्रयोगश्च—तमो द्रव्यं पार्थिवं च । अबाधितनीलादिप्रत्ययविषयत्वात् । घटादिवत् । न च रूपिप्रत्यक्ष आलोकसहकृतचक्षुषः कारणत्वदर्शनात्तमःप्रत्यक्षे तदभावान्न तमसो रूपिद्रव्यत्वमिति वाच्यम् । न हि यत्कचिद्यदपेक्षं तत्सर्वत्र तदपेक्षमिति नियमः । स्वेदादिशैत्यग्रहे वायुसापेक्षस्य स्पर्शनस्यौष्ण्यग्रहे तदभावसापेक्षत्वात् । आलोकाभावमात्रमिति । काश्यपीयानामयं पक्षः । परं तु स न संभवति । तथा सत्यन्धस्योलूकादीनां चाऽऽलोकसत्त्व एवान्धकारप्रतीतिर्जायते सा न स्यात् । अभावस्य प्राङ्निरस्तत्वाच्च । अभावस्वरूपत्वे गाढत्वविरलत्वाद्यनुपपत्तेश्च । 'तमः ससर्ज भगवान्' इतिश्रुतिविरोधश्च । एतेन रूपदर्शनाभावमात्रं तम इत्यपि निरस्तम् । द्रव्यान्तरमिति । कौमारिलैरङ्गीकृतोऽयं पक्षः । स च गौरवादेव निरस्तः । इत्यादीति । आदिना नीलगुणमात्रं तम इति पक्षसंग्रहः । अयं च पक्षो नीलमितिधर्मितया स्फुरणान्निराधारनैल्योपलम्भायोगाच्च निरस्तः । न च तमसः पार्थिवत्वे तस्य तेजोगत्यागत्यनुविधानं कथमिति वाच्यम् । यथादृष्टि स्वभावव्यवस्थापनात् । यथाऽयस्कान्तस्थितिगत्यनुविधानं पृथग्द्रव्यस्याप्ययसो दृश्यते तद्वत् । न च तमसः पार्थिवत्वे तद्व्यवहितस्य प्रकाशस्थस्य घटादेः कथं प्रत्यक्षमिति वाच्यम् । जलादेरिव तमसः स्वभावादेव दृग विरुद्धत्वात् ।

पञ्चीकरणेति । तत्र भूतेष्वाकाशोऽवकाशहेतुः । वायुर्वहनादिहेतुः । तेजः ' नादिहेतुः । जलं सेचनपिण्डीकरणादिहेतुः । पृथिवी धारणादिहेतुरिति तत्त्व उक्तम् । चतुर्धाकृत्येति । तदुक्तं तत्त्वमुक्ताकलापे—द्वेधा भूतानि भित्त्वा पुन च भिनत्त्यर्धमेकं चतुर्धा तैरेकैकस्य भागैः परमनुकलयत्यर्धमर्धं चतुर्भिरिति । ए

भूतस्यार्धं स्वभागतोऽर्धान्तरं चतुर्णां भूतानां भागसमुच्चय इति भवति। तथा च स्वभागस्य भूयस्त्वात्परभागस्याऽऽल्पीयस्त्वाच्च पृथिव्यादिव्यपदेशः। वेदे त्रिवृत्करणोपदेशस्तु पञ्चीकरणस्याप्युपलक्षणम्। भूतैः साकं महदहंकारौ मिलित्वा सप्तीकरणमित्यप्याहुः। एतेषु चतुर्विंशतिसंख्याकेषु पञ्च भूतानि प्रकृतिमहदहंकाराश्च शरीरोपादानानि। एकादशेन्द्रियाणि प्रत्येकमसंख्यातानि प्रतिपुरुषं भिन्नानि। आभरणार्पितरत्नानीव शरीरमाक्रम्य तिष्ठन्ति।

शरीरं नाम चेतनं प्रत्याधेयत्वविधेयत्वशेषत्वनियमैरपृथक्सिद्धो द्रव्यविशेष इत्येकं लक्षणम्। नियमेन यदाधेयं नियमेन यद्विधेयं नियमेन यच्छेषमिति

---

पञ्चधा विभक्तानां भागानां पञ्चस्वर्धान्तरेषु योजनमित्यपास्तम्। वेदे। 'तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' [ छा. ६।३।३ ] इत्यादौ। चतुर्विंशतिसंख्याकेषु। प्रकृतिमहदहंकारैकादशेन्द्रियपञ्चतन्मात्रपञ्चमहाभूताख्येषु।

शरीरमिति। आधेयत्वमाश्रितत्वम्। विधेयत्वं नियाम्यत्वम्। शेषत्वमङ्गत्वम्। अपृथक्सिद्ध इति। यावत्सत्तमसंबन्धानर्हत्वमपृथक्सिद्धत्वम्। नियमेनाऽऽधेयत्वं नियमेन विधेयत्वं नियमेन शेषत्वमित्येतेऽपृथक्सिद्धेरवान्तरभेदाः। एकं लक्षणमिति। अस्मिन्पक्ष आधेयत्वविधेयत्वशेषत्वेष्वन्यतमेनैव सिद्ध इतरद्वयोच्चारणं व्यर्थमिति व्यवच्छेद्यपरिक्लेशः। इत एव वाऽरुचेराह—नियमेनेति। अत्रायं निष्कर्षः—यस्य चेतनस्य यदवस्थं द्रव्यं यावत्सत्तमसंबन्धानर्हं स्वशक्ये नियन्तव्यस्वभावं तदवस्थं तस्य शरीरमिति प्रथमलक्षणम्। चेतनस्येत्यस्य चैतन्यविशिष्टस्येत्यर्थः। तेन चैतन्यस्य तत्तदाश्रयं प्रति शरीरत्वव्यवच्छेदः। यदवस्थमित्यव्याप्तिपरिहारः। तस्यैव द्रव्यस्यावस्थान्तरे वियोगात्। द्रव्यमिति क्रियादिव्यवच्छेदः। यावत्सत्तमित्यादिना जीवं प्रति परकायप्राणेन्द्रियकुठारादिव्यवच्छेदः। प्राणादीनां हि पृथगेव सृष्टानां शरीरनिर्माणात्पूर्वमभावात्। तथा मोक्षात्पश्चादपि तेषामाप्रलयावस्थानात्। स्वशक्य इत्यसंभवपरिहारः। न हि विहङ्गमसाध्यं विहायोगमनं मानुषमृगसरीसृपादिशरीरस्य शक्यम्। न च तावता तेषामशरीरत्वम्। नियन्तव्येत्यनियन्तव्यव्याध्यादिव्यवच्छेदः। व्याध्यादीनां ज्वराद्यात्मिकानां तदीयत्वात्, स्वशक्ये प्रवर्तमानत्वाच्च। एवं पुत्रशरीरादीनामपि स्वभावशब्देनाव्याप्तिपरिहारः। व्याध्यादिदशायां स्वशक्येऽप्यशक्यनियमनानां मानुषशरीरादीनामपि शरीरत्वात्तदानीमेतस्याशक्यनियमनत्वस्यौपाधिकत्वात्। यस्य चेतनस्य यदवस्थं द्रव्यं यावत्सत्तं धार्यं तदवस्थं तस्य शरीरमिति द्वितीयं लक्षणम्। पुत्रशरीरादिकं न यावत्सत्तं धार्यमिति व्यवच्छिद्यते। शेषं प्राग्वत्। यस्य चेतनस्य यदवस्थं द्रव्यं यावत्सत्तमशेषतानर्हं तदवस्थं तस्य शरीरमिति तृतीयं लक्ष-

---

१ ध. °भागोऽर्धा°।

**लक्षणत्रयं वा योज्यम् । ईश्वरतज्ज्ञानव्यतिरिक्तं द्रव्यं शरीरमिति वा तटस्थलक्षणम् । एतेन चेष्टाश्रयं शरीरम् , इन्द्रियाश्रयं शरीरम् , भोगायतनं शरीरम्, शिरःपाणिपादादिमयं शरीरम्, इत्यादीनि परोक्तानि शरीरलक्षणानि निरस्तानि ।**

---

णम् । अशेषतानर्हमिति पूर्ववदेव पुत्रादिव्यवच्छेदः । दानादिना तेषां स्वशेषत्वनिवर्तनस्य शक्यत्वात् । शरीरस्य तु दासत्वाद्यापादनेन परशेषत्वेऽपि सांसिद्धिकस्य स्वस्वशेषत्वस्य निवर्तयितुमशक्यत्वादिति न्यायसिद्धाञ्जने स्पष्टम् । न च शिलाकाष्ठादिष्वव्याप्तिः । तत्रापि स्वरूपतश्चैतन्यसत्त्वात् । शिलादिशरीरिणोऽपि जीवा विद्यन्त इत्यहल्यादिवृत्तान्तश्रवणात्सिध्यति । अत एव वेदार्थसंग्रहे शिलाकाष्ठादिशब्दानामपि तदन्तर्यामिजीवतदन्तर्यामिपरमात्मपर्यन्तार्थवाचकत्वमुक्तम् । लक्षणत्रयेऽपि शरीरत्वस्य पुत्रत्वादिवत्सप्रतियोगित्वमेव । तटस्थलक्षणमाह-ईश्वरेति । ईश्वरतज्ज्ञानव्यतिरिक्तं द्रव्यं 'जीवनित्यविभूतिप्रकृतिकाल' एतच्चतुष्टयम् । अस्मिल्लक्षणे शिलाकाष्ठादिष्वव्याप्तिशङ्काऽपि नेति बोध्यम् । नैयायिकाद्युक्तं खण्डयति-एतेनेति । ईश्वरतज्ज्ञानव्यतिरिक्तसर्वद्रव्येषु शरीरत्वस्येष्टत्वेनेत्यर्थः । किंच चेष्टाशब्देन क्रियामात्रविवक्षायां घटादिष्वतिव्याप्तिः । प्रयत्नवदात्मसंयोगासमवायिकारणकक्रियाविवक्षायां प्रयत्नवदीश्वरसंयोगासमवायिकारणकक्रियाश्रयेषु भूधरादिष्वतिव्याप्तिः । तत्र तैः शरीरत्वस्यानभ्युपगमात् । प्रयत्नवज्जीवेति विशेषणे प्राणादिष्वतिव्याप्तिः । बुद्धिपूर्वकप्रयत्नेति विशेषणेऽपि बुद्धिपूर्वकाकुञ्चनप्रसारणादिदशायां तेष्वेवातिव्याप्तिः । तथेन्द्रियाश्रयत्वमिन्द्रियसमवायित्वमिन्द्रियसंयोगित्वं वा । नाऽऽद्यः । शरीरेन्द्रिययोः समवायाभावात् । इन्द्रियावयवानां तन्मते शरीरत्वप्रसङ्गाच्च । नान्त्यः । घटादिष्वपि तत्संभवात् । न च यावत्सत्त्वमिन्द्रियसंयोगो विवक्षित इति वाच्यम् । अनिमेषचक्षुषि प्रेक्षमाणे पुरुषे तात्कालिकोत्पन्नविनष्टबुद्बुदप्रभृतिष्वतिव्याप्तेः । तथा भोगायतनत्वं भोगस्थानत्वमात्रं चेत्तदा गृहादिष्वतिव्याप्तिः । न च यदाश्रित्यैवाऽऽत्मा भोगवान्भवति तद्भोगायतनमिति विवक्षितमिति वाच्यम् । असंभवात् । अशरीरस्यापि मुक्तस्य भोगविशेषाभ्युपगमात् । नच दुःखात्मकभोगो विवक्षित इति वाच्यम् । तथाऽपीन्द्रियेष्वतिव्याप्तेः । ईश्वरमुक्तादिभिरिच्छागृहीतशरीरेष्वव्याप्तेश्च । तथा शिरःपाणिपादादिमयं शरीरमित्यपि न लक्षणम् । शिलापुत्रकादिष्वपि तत्संभवात् । न च प्राणादिमत्त्वे सतीति निवेशान्न दोष इति वाच्यम् । मृतशरीरेऽव्याप्तेः । न च यदा कदाचित्प्राणादिसंबन्धमात्रं विवक्षितमिति वाच्यम् । तथाऽपि स्थावरादिशरीरेष्वव्याप्तेः । तेषु प्राणादिसत्त्वेऽपि पाणिपादादिसंस्थानाभावादिति बोध्यम् ।

शरीरं द्विविधम्—नित्यमनित्यमिति। तत्र नित्यं त्रिगुणद्रव्यकालजीवशुभाश्रयादिकमीश्वरशरीरम्। नित्यसूरीणां च स्वाभाविकं गरुडभुजगादिरूपम्। अनित्यं द्विविधम्। अकर्मकृतं कर्मकृतं चेति। प्रथममीश्वरस्य महदादिरूपम्। तथाऽनन्तगरुडादीनां चेच्छागृहीतं तत्तद्रूपम्। कर्मकृतमपि द्विविधम्—स्वसंकल्पसहकृतकर्मकृतं केवलकर्मकृतं चेति। पूर्वं महतां सौभरिप्रभृतीनामुत्तरं चान्येषाम्। पुनः सामान्यतो द्विविधम्। स्थावरजङ्गमभेदात्। स्थावराः शिलावृक्षगुल्मलतादयः। जङ्गमाश्चतुर्धा। देवमनुष्यतिर्यङ्नारकिभेदात्। उद्भिज्जस्वेदजजरायुजाण्डजभेदा अपि विभागजधर्माः। अयोनिजशरीराण्यपि सन्ति।

एवं पञ्चीकृतानां भूतानामेवाण्डोत्पादकत्वम्। अण्डोत्पादनात्पूर्वसृष्टिः समष्टिसृष्टिः। अनन्तरसृष्टिर्व्यष्टिसृष्टिः। महदादीनामुत्पत्तिर्नाम तालीयपत्रजतताटङ्कन्यायेनावस्थान्तरापत्तिरेव। सेनावनराश्यादिव्यवहारवत्। पूर्वापरावस्थाविशेषसंबन्धमात्रेण कार्यकारणभेदव्यवहारः। तत्र पूर्वा-

---

शुभाश्रयेति। '*आदित्यवर्णम्*' (श्वे० ३।८) इत्यादिश्रुतिप्रतिपादितमीश्वरशरीरं शुभाश्रयसंज्ञकम्। गरुडादीनामिति। आदिपदेन मुक्तसंग्रहः। देवमनुष्येति। असुरयक्षराक्षसादयोऽपि देवयोनयः। भूलोकवर्तिब्रह्मक्षत्रियविट्शूद्रादयो मनुष्ययोनयः। मृगपक्षिसरीसृपादयस्तिर्यग्योनयः। नारकिणस्तु रौरवादिषु दुःखैकाश्रयदुस्त्यजविग्रहाः। अयोनिजशरीराण्यपीति। एतानि च देवादिषु त्रिष्वपि संभवन्ति। प्रजापतिमधुकैटभधृष्टद्युम्नैरावतस्वेदजादिदर्शनात्। अत्र व्यष्टिजीवशरीराणामीश्वरं प्रति शरीरत्वं सद्वारकमद्वारकं चेत्येके। सद्वारकं जीवद्वारकम्। तच्चानुभवसिद्धम्। अस्मदादिहस्तपादादीनां जीवद्वारेश्वरनियाम्यत्वदर्शनात्। किं तु सुषुप्तिमूर्छाद्यवस्थासु स्वाभाविकमीश्वरनियाम्यत्वमेव देहदेहिनोर्दृश्यते। इदमद्वारकनियमनं सद्वारकमात्रत्वे न स्यात्। अतोऽद्वारकत्वमपि तस्य स्वीकार्यम्। न चाद्वारकत्व एकस्य युगपदनेकं प्रति शरीरत्वमनुपपन्नमिति वाच्यम्। तल्लक्षणयोगेन तदुपपत्तेः। अनेकं प्रति शेषत्वादिवत्। सद्वारकमेवेत्यन्ये। सुषुप्त्यादिषु जीवस्य ज्ञानेच्छारहितत्वेऽपि तत्सत्तामात्रेण तद्द्वारैव देहनियमनात्। दिव्यमङ्गलविग्रहाद्यचेतु तु शरीरत्वमद्वारकमेव।

पञ्चीकृतानामिति। तदुक्तं विष्णुपुराणे—

---

१ क. 'नित्यसू°। २ ख. ग. 'विक ग°। ३ घ. 'न्द्वजादिभे°। ४ घ. तानामे°। ५ घ. °त्नीव°। ६ ख. °शेषः सं°।

चस्थाप्रहाणेन विजातीयावस्थान्तरमासौ तत्त्वान्तरव्यपदेशः पृथिवीपर्यन्त एव । इत्थं प्रकृतिमहदहंकारैकादशेन्द्रियतन्मात्रपञ्चकभूतपञ्चकविभागेन चतुर्विंशतितत्त्वानि वर्णितानि । एतेन न्यूनाधिकसंख्याकतत्त्ववादिनो बाह्याः पाशुपताश्च निरस्ताः । परमाणुकारणत्ववादिनोऽपि निरस्ताः ।

प्रकृत्यादय ईश्वरस्य जीवस्य च भोग्यभोगोपकरणभोगस्थानानि च भवन्ति । भोग्यं विषयाः । भोगोपकरणं चक्षुरादिकरणानि । भोगस्थानानि चतुर्दशभुवनान्तर्वर्त्यण्डजातानि । अण्डं नाम कपित्थफलाकारं पञ्चीकृतपञ्चभूतारब्धं प्राकृतद्रव्यम् । तद्यथा—पद्माकारा भूः । कर्णिकाकारो मेरुः । मेरोर्दक्षिणतो भारतकिंपुरुषहरिवर्षाणि त्रीणि । उत्तरतो रम्यकहिरण्यककुरुवर्षाणि त्रीणि । पुरतो भद्राश्ववर्षम् । पश्चात्केतुमालाख्यं वर्षम् । मध्ये त्विलावृतम् ।

---

' नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ।
नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥ '

इति । ततश्च यथा कश्चिन्मृज्जलादीन्मेलयित्वैकं द्रव्यं कृत्वा भित्तिं करोति तथेश्वर एतत्सर्वं मेलयित्वा तैरेकमण्डं सृजतीति भावः । न्यूनाधिकेति । शून्यमेव तत्त्वमिति शून्यवादिनो बौद्धाः । अशेषविशेषप्रत्यनीकं चिन्मात्रं ब्रह्मैकमेव तत्त्वमिति मायावादिनः । स्वतन्त्रास्वतन्त्रभेदेन द्विविधं तत्त्वमिति पूर्णप्रज्ञाचार्याः । पृथिव्यादीनि चत्वारि भूतानि तत्त्वानीति चार्वाकाः । प्रकृत्यादीनि चतुर्विंशतिसंख्याकानि तत्त्वानि जीवेन सह पञ्चविंशतिरिति निरीश्वरसांख्याः । ईश्वरेण सह षड्विंशतिरिति सेश्वरसांख्याः । एते सर्वे निरस्ता इत्यर्थः । पाशुपतमतं च सर्वदर्शनसंग्रहादवसेयम् । परमाणुकारणत्वेति । नैयायिकाः परमाणूनामुपादानकारणत्वं वदन्ति । तत्र किं परमाणवः सावयवा निरवयवा वा । आद्ये तेषामप्यवयवानां सावयवत्वमित्यनवस्था । अन्त्ये परमाणूनां मिथः संयोग एव न संभवति । संयोगो हि किंचिदंशावच्छेदेनैव भवति । इतरथा सर्वेषु परमाणुष्वेकपरमाणुप्रदेशमात्रावस्थितेषु स्वाधिकदेशव्यापिकार्यारम्भो न स्यात् । अवयवास्पृष्टे प्रदेशेऽवयविनः स्थितेरदर्शनात् । न चावयवनाशादवयविनाशे क्षणमनाधारोऽवयवीति वाच्यम् । तथा कल्पनायामपि पूर्वं तन्तुसंधानवच्छिन्नप्रदेशे पटस्य वृत्तेरकल्पनात् । तथा च द्व्यणुकाद्यारम्भानुपपत्तौ मेरुसर्षपादिविचित्रभेदासिद्धिः । किं च दिग्भेदेन परमाणूनां सावयवत्वावश्यंभावेन निरवयवत्वं दुर्वचमिति बोध्यम् ।

पद्माकारेति । तदुक्तं विष्णुपुराणे—

---

१ घ. 'स्थाप्र°'।

एवं नववर्षयुक्तं जम्बूद्वीपं लक्षयोजनविस्तीर्णं समपरिमाणेन लवणसागरेणाऽऽवृतम्। स सिंधुर्द्विगुणेन सप्तवर्षात्मकेन प्लक्षद्वीपेन वेष्टितः। सोऽपीक्षुसमुद्रेण। सोऽब्धिः शाल्मलिद्वीपेन। स पुनः सुरासमुद्रेण। स कुशद्वीपेन। स सर्पिःसमुद्रेण। सोऽपि क्रौञ्चद्वीपेन। स दध्यर्णवेन। सोऽपि शाकद्वीपेन वेष्टितः। स क्षीरार्णवेन। स वर्षद्वयविभाजकवलयाकारमानसोत्तरपर्वतसहितेन पुष्करद्वीपेन। स शुद्धजलार्णवेन। एवं द्वीपानामुत्तरोत्तरद्वैगुण्यं द्रष्टव्यम्। प्लक्षद्वीपादिपञ्चसप्तवर्षात्मकाः सप्तद्वीपात्मकोऽयं द्विगुणीकृतया काञ्चनभूम्या वृतः। काञ्चनभूमिस्तु लोकालोकपर्वतेन। पर्वतस्त्वन्धतमसा। तदन्धतमो गर्तोदकेन। तदण्डकटाहेन।

एवं भूमेरधोऽतलवितलरसातलतलातलमहातलसुतलपातालभेदात्सप्त लोकाः अधो नारकास्ते च पापकर्मणां पापानुभवभूमयः। रौरवाद्या मुख्यतयैकविंशतिप्रभेदाः। ततस्तमः। ततो गर्तोदकम्। अनन्तरमण्डकटाहः।

एवं भूमेरुपरि लक्षयोजनात्सूर्यमण्डलम्। तदेव भुवर्लोकः। तदुपरि चन्द्रमण्डलम्। तस्मादुपरि नक्षत्रबुधशुक्राङ्गारकबृहस्पतिशनिसप्तर्षिमण्डलानि। तदुपरि ध्रुवः। सूर्यमण्डलमारभ्य ध्रुवलोकपर्यन्तं स्वर्लोकः। चतुर्लक्षादुपरि कोटियोजनोच्छ्रायो महर्लोकः। तस्माद्द्विगुणो जनलोकः। ततश्चतुर्गुणस्तपो-

'भूपद्मस्यास्य शैलोऽसौ कर्णिकाकारसंस्थितः।' (२।२।९)

'भारतं प्रथमं वर्षं ततः किंपुरुषं स्मृतम्।
हरिवर्षं तथैवान्यन्मेरोर्दक्षिणतो द्विज॥
रम्यकं चोत्तरं वर्षं तथैवानु हिरण्मयम्।
उत्तराः कुरवश्चैव यथा वै भारतं तथा' (२।२।१२-१३)

द्वीपमण्डलप्रान्तवर्तित्वाद्भारतवर्षवद्धनुराकारं कुरुवर्षमित्यर्थः।

'भद्राश्वं पूर्वतो मेरोः केतुमालं च पश्चिमे।
वर्षे द्वे तु मुनिश्रेष्ठ तयोर्मध्य इलावृतम्।' (२।२।२३)

'नववर्षं तु मैत्रेय जम्बूद्वीपमिदं मया।
लक्षयोजनविस्तारं संक्षेपात्कथितं तव॥
जम्बूद्वीपं समावृत्य लक्षयोजनविस्तरः।
मैत्रेय वलयाकारं स्थितः क्षारोदधिर्बहिः' (२।२।२७।२८)

इत्यादिविष्णुपुराणे द्वितीयांशे स्पष्टमिति तत एवावधार्यताम्॥

इति श्रीयतीन्द्रमतदीपिकाप्रकाशे चतुर्थोऽवतारः॥ ४॥

---

१ ग. °र्षात्मिका.°। २ ग. °र्यन्त स्व°।

लोकः। तस्माद्द्वादशकोट्युच्छ्रायः सत्यलोकः। ततस्तमो गर्तोदकमण्डकटाहश्च। एवं तिर्यगूर्ध्वप्रमाणेन पञ्चाशत्कोटियोजनत्वं भूमेरुक्तं भवति। शतकोटियोजनविस्तीर्णवादो मानभेदेन। अण्डकटाहस्तु कोटियोजनोच्छ्रायः। तदण्डं दशोत्तरावरणावृतम्। एतादृशान्यण्डान्यनन्तानि जलबुद्बुदवत्। युगपदीश्वरसृष्टानि। ईश्वरस्य चतुर्मुखपर्यन्ता सृष्टिर्द्वारका[1]। तदनन्तरं सद्वारके[2]ति विवेकः। विस्तरस्तु पुराणरत्ना[3]दिषु द्रष्टव्यः। इति प्रकृतिर्निरूपिता॥

इति श्रीवाधूलकुलतिलकश्रीमन्महाचार्यस्य प्रथमदासेन[4] श्रीनिवासदासेन विरचितायां यतीन्द्रमतदीपिकायां प्रकृतिनिरूपणं नाम चतुर्थोऽवतारः॥ ४॥

---

## अथ पञ्चमोऽवतारः।

---

अथाचिद्विशेषः कालो निरूप्यते—कालो नाम गुणत्रयरहितो जडद्रव्यविशेषः। स च नित्यो विभुश्च। भूतभविष्यद्वर्तमानभेदेन त्रिविधः। युगपत्क्षिप्रचिरादिव्यपदेशहेतुः। निमेषकाष्ठाकलामुहूर्तदिवसपक्षमासऋत्वयनसंवत्स-

---

अथ पञ्चमोऽवतारः।

---

नित्य इति। ' सदेव सोम्येदमग्र आसीत् ' ( छा. ६।२।१ ) इति श्रुतावग्रेशब्देन ' नासदासीन्नो सदासीत्तदानीम् ' ( तै. ब्रा. २।८।९।३) इत्यत्र तदानींशब्देन च कालस्यैवाभिधानात्सृष्टेः प्रागपि कालस्यास्तित्वं सिध्यति। तदुक्तं पराशरेणापि—

' अनादिर्भगवान्कालो नान्तोऽस्य द्विज विद्यते ' इति।

केचित्तु ' विद्या कालो भवत्कृतौ ' इत्यादिकालोत्पत्तिवचनात्कालस्यानित्यत्वमाहुः। तन्न। प्रागुक्तपराशरवचनानुसारेणैतदुत्पत्तिवचनस्योपाध्युत्पत्त्यभिप्रायकत्वात्। किं चोत्पत्तेः पूर्वं नाशतः पश्चाच्च कालो नास्तीति तैरङ्गी क्रियते न वा। अन्त्येऽस्मन्मतं न निषिद्धमिति नास्माभिस्तत्र किंचिदुत्तरं दीयते। आद्ये पूर्वपश्चाच्छब्दयोर्निरर्थकत्वं सार्थकत्वं वा। प्रथमे निरर्थकनिग्रहस्थानापत्तिः। द्वितीये कालस्यैव तदर्थत्वात्तत्र कालनिषेधे स्ववचनविरोधः। तथा चोक्तम्—

' यतः कुतश्चित्कालांशात्परतः पूर्वतोऽपि वा।
कालो न चेत्तदुक्तिस्थं पौर्वापर्यं न सिध्यति ' इति।

विभुरिति। सर्वत्र कार्यविशेषणतया प्रतीतेरिति भावः। निमेषेति। निमेषः

---

१ घ. °द्वारिका°। २ घ. द्वारिके°। ३ विष्णुराणम्। ४ घ. °महापापात्रेण श्री°। ५ क. °शातत्परादिनाडी कला°।

रादिव्यपदेशहेतुश्च। मनुष्यमानेन मासः पितॄणां दिनम्। तेषाममावास्यां तु मध्याह्नम्। मनुष्यमानेन वत्सरो देवानां दिनम्। तेषामुत्तरायणमहः। दक्षिणायनं रात्रिः। एवं देवमानेन द्वादशवर्षसहस्रसंख्याकं चतुर्युगमित्युच्यते। तत्र चतुःसहस्रवर्षसंख्याकं कृतयुगम्। तत्र पूर्णो धर्मः। त्रिसहस्रवर्षसंख्याकं त्रिपाद्धर्मवत्त्रेतायुगम्। द्विसहस्रवर्षपरिमितं सार्धपादधर्मवद्द्वापरम्। सहस्रवर्षसंख्याकमेकपादधर्मसंयुक्तं कलियुगम्। एतेषां संधिर्द्विसहस्रसंख्याकः। एवं चतुर्युगसहस्राणि ब्रह्मणो दिवसप्रमाणमुच्यत इत्युक्तरीत्या चतुर्युगसहस्राणि ब्रह्मणो दिवसमात्रप्रमाणकमेव। एवं रात्रिरपि।

ब्रह्मणोऽह्नि चतुर्दश मनवो जायन्ते। इन्द्रा अपि तथैव। तथा सप्तर्षयश्च। एकैकमनोरेकसप्ततिचतुर्युगपरिमाणः कालः। एवं ब्रह्ममानेन ब्रह्मणः शतवर्षजीवितम्। एतत्सर्वं कालाधीनम्। एवं नित्यनैमित्तिकप्राकृतप्रलया अपि कालाधीनाः। कालस्य स्वकार्यं प्रति स्वस्योपादानत्वम्। अखण्डकालो नित्यः। कार्यः पुनरनित्यः। एवंभूतः काल ईश्वरस्य क्रीडापरिकरो भवति। लीलाविभूतावीश्वरः कालाधीन एव कार्यं करोति। नित्यविभूतौ तु कालस्य विद्यमानत्वेऽपि तस्य न स्वातन्त्र्यम्। केचित्तु तत्र कालो नास्तीति वदन्ति। अन्ये तु तामसमहान्काल इति। उभयेषामागमबाधः।

---

प्रसिद्धः। पञ्चदश निमेषाः काष्ठा। त्रिंशत्काष्ठाः कला। त्रिंशत्कला मुहूर्तम्। मुहूर्तानि त्रिंशद्दिवसः। त्रिंशद्दिवसाः पक्षद्वयरूपो मासः। द्वौ मासावृतुः। ऋतवस्त्रयोऽयनम्। अयने द्वे संवत्सरः। एतेषां संधिरिति। कृतयुगस्य पूर्वसंधिश्चत्वारि शतानि वर्षाणि। अपरसंधिरपि तथैव। त्रेतायुगस्य पूर्वसंधिस्त्रीणि शतानि। अपरसंधिरपि तथैव। द्वापरस्य पूर्वसंधिर्द्वे शते। अपरसंधिरपि तथैव। कलियुगस्य पूर्वसंधिः शतम्। अपरसंधिरपि तथैवेति संकलनया द्विसहस्रसंख्या संपद्यते।

कार्यः। निमेषादिरूपः। क्रीडापरिकर इति। निखिलजगदुत्पत्तिस्थितिलयलीलस्य सर्वेश्वरस्यायं कालो लीलोपकरणमित्यर्थः। सहकारित्वेन चास्य लीलोपकरणत्वम्। ईश्वरेण सृष्ट्यादिनिर्वाहसमये सत्यसंकल्पेन स्वेन कृतस्य कालनियमस्यानुसारेण तत्तत्कालागमनं प्रतीक्ष्य निर्वहणात्। अयं च निमेषकाष्ठादिरूपेण परिणामास्पदद्रव्यविषयोऽपि भवतीति बोध्यम्। लीलाविभूताविति। वैकुण्ठातिरिक्तसृष्टिर्लीलाविभूतिः। वैकुण्ठसृष्टिर्नित्यविभूतिः। न स्वातन्त्र्यमिति।

---

१ घ. °ह्या मध्याह्नः। म°। २ क. °त द्विपादध°। ३ घ. विरवम्। ४ अन्ये तु इत्यारभ्य बाधश्च इत्यन्तः पाठः क. घ. पुस्तकयोर्न दृश्यते।

प्रत्यक्षबाधश्च। केचित्तु षडिन्द्रियवेद्यः काल इत्यप्याहुः। तेनानुमेयपक्षनिरासः। इति कालो निरूपितः॥

इतिश्रीवाधूलकुलतिलकश्रीमन्महाचार्यस्य प्रथमदासेन श्रीनिवासदासेन विरचितायां यतीन्द्रमतदीपिकायां कालनिरूपणं नाम पञ्चमोऽवतारः॥ ५॥

---

## अथ षष्ठोऽवतारः।

---

अथ नित्यविभूतिर्निरूप्यते—शुद्धसत्त्वधर्मभूतज्ञानजीवेश्वरसाधारणं लक्षणमजडत्वम्। अजडत्वं नाम स्वयंप्रकाशत्वम्। तत्र शुद्धसत्त्वधर्मभूतज्ञानसाधारणलक्षणं पराक्त्वे सत्यजडत्वम्। तत्तु स्वयंप्रकाशत्वे सति परस्मा एव भासमानत्वम्।

---

कालः संपच्यते तत्र न कालस्तत्र वै प्रभुरित्युक्तत्वात्। षडिन्द्रियेति। क्षणमयं तिष्ठतीत्यादिप्रकारेण तत्तदर्थविशेषणतया प्रतीतेः। नीरूपस्यापि रूपादेरिव प्रत्यक्षविषयत्वमिष्टमेव। अनुमीयमानस्तु न विशेषणम्। न हि वह्निमनुमाय वह्निमान्पर्वत इति प्रत्यक्षं भवति। किंच प्रत्यक्षप्रतीतौ विशेषणतया दृश्यमानस्य कालस्यानुमेयत्वे प्रत्यक्षज्ञानविषयीभूतानां घटादिपदार्थानामप्यानुमानिकत्वं प्रसज्येतेति सौत्रान्तिकवादप्रसङ्ग इति बोध्यम्॥

इति श्रीयतीन्द्रमतदीपिकाप्रकाशे पञ्चमोऽवतारः।

---

## अथ षष्ठोऽवतारः।

---

नित्यविभूतिरिति। इयमेव शुद्धसत्त्वशब्देन व्यवह्रियते। शुद्धं सत्त्वं यत्रेत्यर्थात्। पराक्त्वे सतीति। धर्मभूतज्ञानस्येव शुद्धसत्त्वस्यापि परस्मै भासमानत्वात्पराक्त्वम्। बन्धकाले तु शुद्धसत्त्वं न प्रकाशते। सुषुप्तौ धर्मभूतज्ञानवत्। अजडत्वमिति। ननु प्रसिद्धशास्त्रेषु तावदजडत्वं शुद्धस्य सत्त्वस्य न पश्यामः। अथ रहस्यागमवाक्यविशेषैस्तादिष्येत तर्हि षाड्गुण्यमयत्वमपि तस्येष्टव्यम्। तथा च चेतनत्वप्रसङ्गः। अतस्त्रिगुणविभूतेरिवास्या नित्यविभूतेरपि जडत्वमेवेति चेदत्र केचित्—निःशेषाविद्यानिवृत्तिहेतुतया निरुपाधिकज्ञानविकासस्थानतया वा आयुर्घृतमितिवज्जडेऽप्यजडत्वोपचार इति। वस्तुतस्तु किमात्मिकैषा भगवतो व्यक्तिरिति प्रश्ने

शुद्धसत्त्वं नाम त्रिगुणद्रव्यव्यतिरिक्तत्वे सति सत्त्ववत्त्वं निःशेषाविद्या-निवृत्तिदेशविजातीयान्यत्वम्। सा विभूतिरूर्ध्वप्रदेशेऽनन्ता। अधःप्रदेशे

---

यज्ञात्मको भगवानिति प्रतिवचनात्किमात्मको भगवानिति पुनः प्रश्ने ज्ञानात्मक इत्युक्तत्वाज्ज्ञानात्मकत्वेन मुख्यमेवाजडत्वमस्याः।

स्वसत्ताभासकं सत्त्वं गुणसत्त्वाद्विलक्षणम्।

इत्युपबृंहणस्वारस्याच्च। नन्वियं नित्यविभूतिः प्राकृतत्रिगुणमय्येवेत्यनित्यैव। नित्यत्वं त्वापेक्षिकम्। अत एव 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इति कारणवाक्य एकत्वावधारणमुपपद्यते। नित्यविभूतेर्नित्यत्वे तु जगत्कारणस्य सद्वितीयत्वापत्तिः। शुद्धसत्त्वव्यवहारस्तु रजस्तमसोरभिभूततयाऽप्युपपद्यत इति चेन्नैवम्। श्रुतावेकत्वावधारणं स्रक्ष्यमाणव्यपेक्षम्। सृष्टिकालापेक्षया स्रक्ष्यमाणस्य जगत उपदेशकालापेक्षयेदंकारगोचरस्य प्रलयदशायामविभक्तनामरूपतयैकत्वमवधार्यते। तथाचोक्तं संवित्सिद्धौ—

यथा चोलनृपः सम्राडद्वितीयोऽद्य भूतले।
इति तत्तुल्यनृपतिनिवारणपरं वचः॥
न तु तद्भृत्यतत्पुत्रकलत्रादिनिषेधकमिति।

अवश्यं चैतत्सर्वैरभ्युपेयम्। अन्यथा मायावादिमतेऽप्येकत्वावधारणेन प्रलये मायाया विलयापत्तिः। औपाधिकभेदवादिमते चोपाध्यंशप्रध्वंसः स्यात्। यदि मायोपाधिविलयस्तैरभ्युपगम्येत तर्हि ब्रह्मणस्तदुपहितत्वाभावेन विश्वप्रसूत्यभावादनुपहितस्य जगत्कारणत्वानभ्युपगमात्कारणवाक्यं दत्तजलाञ्जलि स्यादित्यवधेयम्।

शुद्धसत्त्वं नामेति। तमोरहितत्वे सति सत्त्ववत्त्वमित्यपि लक्षणं बोध्यम्। शुद्धसत्त्वे प्रमाणं तु 'आदित्यवर्णं तमसः परस्तात्' (श्वे. ३।८) 'यो अस्याध्यक्षः परमे व्योमन्' (तै० ब्रा० २।८।९) 'सहस्रस्थूणे विमिते दृढ उग्रे यत्र देवानामधि देव आस्ते' 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' (नृ० पू० ५।१०) इत्यादिश्रुतयः। तद्विष्णोरित्यत्र व्यतिरेकनिर्देशबलात्स्वरूपाद्भेदे सिद्धे पदशब्दस्वारस्यात्सदा दृश्यत्वबलाच्च सदा पश्यदनेकद्रष्टृविशिष्टस्थानविशेषावेधिरिति विशिष्टविधिर्बोध्यः। तच्चाऽऽकाशं सनातनमिति रामायणं दिव्यं स्थानमजरं चाप्रमेयमिति महाभारतं चात्र प्रमाणम्। अनन्तेति। श्रुतौ नित्यविभूतेरानन्त्यस्य तमःपरत्वस्य च प्रतिपादनेनाऽऽनन्त्यतमःपारत्वयोर्विरुद्धयोरेकत्र समावेशाय केनचि-

---

१ प. 'बृतदे°'।

परिच्छिन्ना । अचेतना स्वयंप्रकाशा च । आनन्दावहत्वादानन्दनामिका । पञ्चोपनिषन्मन्त्रप्रतिपाद्यतया पञ्चोपनिषदात्मिका । अप्राकृतपञ्चशक्तिमत्तया पञ्चशक्तिमयेति निगद्यते ।

सा विभूतिरीश्वरस्य नित्यानां मुक्तानां चेश्वरसंकल्पाद्भोग्यभोगोपकरणभोगस्थानरूपा च भवति । भोग्यमीश्वरशरीरादि । भोगोपकरणं चन्दनकुसुमवस्त्रभूषणायुधादीनि । भोगस्थानं तु गोपुरपुरप्राकारमण्डपविमानोद्यानपद्मिन्यादिकम् । तत्रेश्वरस्य नित्यानां च शरीराणि भगवन्नित्येच्छासिद्धानि । मुक्तानां शरीराणि तेषां पित्रादिसृष्टिर्युगपदनेकशरीरपरिग्रहा इत्यादीनि भगवत्संकल्पादेव भवन्ति । भगवतो व्यूहविभवार्चावतारशरीराण्यप्यप्राकृतमयानि । अर्चावतारेषु प्रतिष्ठानन्तरं प्रसादोन्मुखेश्वरसंकल्पाधीनमप्राकृतशरीरमात्रमाविर्भवति । प्राकृताप्राकृतसंसर्गः कथमिति न शङ्कनीयम् । श्रीरामकृष्णाद्यवतारशरीरवदिति प्रमाणानुसारेण परिहारो द्रष्टव्यः ।

---

त्प्रदेशेनाऽऽनन्त्यं केनचित्प्रदेशेन च तमःपरत्वमगत्या कल्प्यत इत्याशयः । स्वयंप्रकाशेति । केचित्तु निरतिशयदीप्तियोगादस्याः स्वयंप्रकाशत्वव्यपदेशः । एवमेवात्यन्तानुकूलरूपरसगन्धादियोगादानन्दव्यपदेश इत्याहुः ।

भोग्येति । इयं च नित्यमुक्तेश्वराणामिच्छानुरूपशरीरेन्द्रियप्राणविषयरूपेणावतिष्ठते ।

इन्द्रियच्छिद्रविधुरा द्योतमानाश्च सर्वशः ।

इति वचनं तु कर्मकृतेन्द्रियाभावपरम् । 'अशरीरं वाव सन्तम्' ( छा. ८।१२। १ ) इत्यादिषु कर्मकृतशरीरादिप्रतिषेधवत् । तत्र कानि चिच्छरीराणि नित्यादीनामीश्वरस्य च नित्येच्छापरिग्रहान्नित्यानि । कानि चिदनित्येच्छापरिग्रहादनित्यानि । मुक्ताश्च कदाचिदशरीराः कदाचिच्च सशरीरा इति भाष्यम् । इन्द्रियाणि तु तत्रत्यानि सर्वाण्यपि नित्यानि । तत्र व्योमादिवद्देवोपादाननिरपेक्षत्वात् । तत्र कानि चिन्नित्यैरीश्वरेण च नित्यपरिगृहीतानि । मुक्तानां तु तत्परिग्रहः शरीरवत्कादाचित्क एवेति बोध्यम् । नित्यविभूतिरपि त्रिगुणवच्चतुर्विंशतितत्त्वात्मिका । किं त्वेषां तत्त्वानां न प्रकृतिविकृतिभावः । दिव्यमङ्गलविग्रहादेर्नित्यत्वश्रवणादिति केचित् ।

---

१ घ. 'मयतया' । २ घ. 'मयीति' । ३ घ. °त्या । मुक्तानामीश्व° । ४ घ. °नां ते° । ५ क. 'कृतानि° । ६ घ. 'रमत्राविं° ।

मुक्तानां शरीरपरिग्रहस्तु वसन्तोत्सववेषपरिग्रहादिवत्स्वामिनः कैङ्कर्यमेव। ईश्वरशरीरस्य षाड्गुण्यमिति व्यवहारः। षाड्गुण्यप्रकाशकत्वात्। नित्यनिरवद्यनिरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्यलावण्ययौवनमार्दवार्जवादयो दिव्यमङ्गलविग्रहगुणाः। तस्य व्यापकत्वं गीतादिषु प्रसिद्धम्। मुक्तस्य शरीरं नास्तीति वचनं तु कर्मकृतशरीराभावपरम्। तत्रत्येन्द्रियाणां नित्यत्वात्। अत एव कार्यकारणभावाभावात्प्राकृतवन्न तत्त्वान्तरव्यपदेशः। एतेन तत्र शरीरादिकं नास्तीति मतनिरासः। तमसः परस्तादित्युक्त्या प्रकृत्येकदेशवादिमतनिरासः। अप्राकृतशब्दस्पर्शरूपरसगन्धाश्रयत्वादाकाशादिव्यावृत्तिः। ज्ञानात्मकत्वप्रतिपादनाज्जडमिति मतनिरासः।

भगवतोऽप्राकृतदिव्यमङ्गलविग्रहस्त्वस्त्रभूषणाध्यायोक्तसर्वोपाश्रयः। तद्यथा—पुरुषस्य कौस्तुभाकारत्वम्। प्रकृतेः श्रीवत्सरूपत्वम्। महतो गदारूपत्वम्।

---

कैङ्कर्यमेवेति। नित्यमुक्तानां शरीरादिपरिग्रहो भगवदभिमततत्कैङ्कर्यरूपभोगाय भगवतोऽपि स्वभोगाय स्वशेषभूतनित्यमुक्तानन्दनाय मुमुक्षूपास्यत्वसिद्धये चेत्युक्तत्वात्। तत्र भगवतः स्वसंकल्पादेव शरीरादिपरिग्रहः। नित्यमुक्तानां तु कदाचित्परमपुरुषमात्रसंकल्पात्कदाचित्परमपुरुषसंकल्पानुविधायिस्वसंकल्पाच्चेति भावः। ज्ञानात्मकत्वेति। ज्ञानात्मकत्वं चात्र स्वयंप्रकाशत्वमेवेति न्यायसिद्धाञ्जनम्।

अस्त्रभूषणाध्यायेति। तत्र ह्येतदुक्तम्—

आत्मानमस्य जगतो निर्लेपमगुणामलम्।
बिभर्ति कौस्तुभमणिस्वरूपं भगवान्हरिः॥
श्रीवत्ससंस्थानधरमनन्ते च समाश्रितम्।
प्रधानं बुद्धिरप्यास्ते गदारूपेण माधवे॥
भूतादिमिन्द्रियादिं च द्विधाऽहंकारमीश्वरः।
बिभर्ति शङ्खरूपेण शार्ङ्गरूपेण संस्थितम्॥
चलस्वरूपमत्यन्तजवेनान्तरितानिलम्।
चक्रस्वरूपं च मनो धत्ते विष्णुः करे स्थितम्॥
पञ्चरूपा तु या माला वैजयन्ती गदाभृतः।
सा भूतहेतुसंघातो भूतमाला च वै द्विज॥

---

१ ख. प्रहादिस्तु°। २ ख. °द्यनिर्दोषनिर°। ३ क. ख. °प्रहा गु°। ४ घ. रीरेन्द्रियादि। ५ घ. °हत्वम°। ६ महतो इत्यारभ्य चक्रत्वम् इत्यन्तः पाठः क. पुस्तके न दृश्यते।

सात्त्विकाहंकारस्य शङ्खरूपत्वम् । तामसाहंकारस्य शार्ङ्गत्वम् । ज्ञानस्य खड्गरूपत्वम् । अज्ञानस्य तदावरकत्वम् । मनसश्चक्रत्वम् । ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां शररूपत्वम् । स्थूलसूक्ष्मभूतानां वनमालात्वम् । चेतश्चक्रमिति चेतनासिरमतिस्तत्संहतिर्मालिका भूतानि स्वगुणैरहंकृतियुगं शङ्खेन शार्ङ्गायते । बाणाः खानिदशाऽपि कौस्तुभमणिर्जीवः प्रधानं पुनः श्रीवत्सं कमलापते तव गदामाहुर्महान्तं बुधा इति संगृह्योक्तं पद्यमनुसंधेयम् ।

सा विभूतिरामोदप्रमोदसंमोदवैकुण्ठाख्यरूपेण चतुर्विधा पुनरनन्ता च । त्रिपाद्विभूतिपरमपदपरमव्योमपरमाकाशामृतनाकाप्राकृतलोकानन्दलोकवैकुण्ठायोध्यादिशब्दवाच्या । एतस्यां विभूतौ द्वादशावरणोपेतमनेकगोपुरप्राकारैरावृतं वैकुण्ठं नाम नगरम् । तत्राऽऽनन्दनामेकं दिव्यालयम् । तदन्तः, रत्नमयानेकस्तम्भसहस्रैर्विरचिता महामणिमण्डपाख्या सभा । तस्यां सहस्रफणामणितेजोविराजितोऽनन्तः । तस्मिन्धर्मादिमयदिव्यसिंहासनम् । तदुपरि चामरहस्तैर्विमलादिभिः सेवितमष्टदलात्मकं पद्मम् । तदुपरि प्रकृष्टविज्ञानधामा शेषः । तदुपरि वाचः परमद्भुतम् । एवं नित्यविभूतिर्निरूपिता ॥

इति श्रीवाधूलकुलतिलकश्रीमन्महाचार्यस्य प्रथमदासेन श्रीनिवासदासेन विरचितायां यतीन्द्रमतदीपिकायां नित्यविभूतिनिरूपणं नाम षष्ठोऽवतारः ॥ ६ ॥

---

यानीन्द्रियाण्यशेषाणि बुद्धिकर्मात्मकानि वै ।
शररूपाण्यशेषाणि तानि धत्ते जनार्दनः ॥
बिभर्ति यच्चासिरत्नमच्युतोऽत्यन्तनिर्मलम् ।
विद्यामयं तु तज्ज्ञानमविद्या चर्मसंस्थितम् ॥

इत्यादि ।

**विमलादिभिरिति** । विमलादयश्च नित्यपारिषद्या इत्याहुः ॥

इति श्रीयतीन्द्रमतदीपिकाप्रकाशे षष्ठोऽवतारः ॥

---

१ ख. °णा रसरु° घ. °णां श° । २ घ. °हंकृतियु° । ३ क. °माणी जीवं प्र° । ४ ख. तेस्त । ५ ख. ग °मको दिव्यालयः । त° । ६ । घ. °णिवि° । ७ क. ग. हस्ताभिर्वि° ।

## अथ सप्तमोऽवतारः ॥ ७ ॥

अथ क्रमप्राप्तं धर्मभूतज्ञानं निरूप्यते—स्वयंप्रकाशाचेतनद्रव्यत्वे सति विषयित्वम्। विभुत्वे सति प्रभावद्द्रव्यगुणात्मकत्वम्। अर्थप्रकाशो बुद्धिरिति तल्लक्षणम्। तद्धर्मभूतज्ञानमीश्वरस्य नित्यानां च सर्वदा नित्यमेव विभु च। बद्धानां तिरोहितमेव। मुक्तानां पूर्वं तिरोहितमनन्तरमाविर्भूतम्। ज्ञानस्य नित्यत्वे ज्ञानमुत्पन्नं ज्ञानं नष्टमिति व्यवहारः कथमिति चेन्न। ज्ञानस्य संकोचविकाशावस्थामादाय तत्संभवात्। दृतेः पादाद्यथोदकं क्षरति तथा ज्ञानमपीन्द्रियद्वारा निःसृत्यार्थेन संनिकृष्यते। अहिकुण्डलवत्संकोचविकासौ।

---

### अथ सप्तमोऽवतारः।

स्वयंप्रकाशेति। ज्ञानं हि विषयप्रकाशवेलायां स्वाश्रयस्यैवाऽऽत्मनः स्वयंप्रकाशम्। अन्यकालान्यपुरुषगतं तु स्मृत्यनुमानादिविषयः संसारिणाम्। इतरेषां तु सर्वज्ञतयाऽन्यकालान्यपुरुषगतमपि स्वकीयेन प्रत्यक्षेण विषयी क्रियते। तथा च भाष्यम्—'यस्त्वनुभूतेः स्वयंप्रकाशत्वमुक्तं तद्विषयप्रकाशनवेलायां ज्ञातुरात्मनस्तथैव न तु सर्वेषां सर्वदा तथैवेति नियमोऽस्ति' इति। अत एवाऽऽहुः—

स्वधीविशेषं सर्वज्ञोऽप्यध्यक्षयति वा न वा।
आद्ये सिद्धा स्वतः सिद्धिरन्यत्रासर्ववेदिता ॥
ज्ञानमस्तीति विज्ञानं स्वात्मानं साधयेन्न वा।
पूर्वत्र स्वप्रकाशत्वं सर्वासिद्धिरतोऽन्यथा इति।

*नित्यमेवेति। तथा च श्रुतिः—' न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते '(* ४।३।३० ) इति। स्मृतिरपि—

यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः।
दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ॥
यथोदपानकरणात्क्रियते न जलाम्बरम्।
सदेव नीयते व्यक्तिमसतः संभवः कुतः ॥
तथा हेयगुणध्वंसादवबोधादयो गुणाः।
प्रकाश्यन्ते न जन्यन्ते नित्या एवाऽऽत्मनो हि ते इति।

इन्द्रियद्वारेति। एतदर्थमेव हि ज्ञानस्येन्द्रियापेक्षा। एतेन ज्ञानस्य नित्यत्वेनोत्पत्त्यभावात्तस्येन्द्रियानपेक्षत्वमेव स्यादित्यपास्तम्। निःसृत्येति। निःसरणं चैतत्

सर्वं ज्ञानं स्वत एव प्रमाणम् । स्वप्रकाशं च । विमतिपन्ना संवित्स्वगतव्यवहारं प्रति स्वाधीनकिंचित्कारा स्वजातीयसंबन्धानपेक्षव्यवहारहेतुत्वात् । अर्थेन्द्रियदीपवत् । न च चक्षुरालोकयोः सजातीयत्वम् । अहंकारिकतैजसभेदाद्भेदः । अनेन ज्ञानस्य क्षणिकत्वं त्रिक्षणावस्थायित्वं प्रातिभासिकव्यवहारस्य मिथ्यात्वं परतः प्रामाण्यं ज्ञानस्यैवाऽऽत्मत्वमित्यादिपक्षा निरस्ताः ।

स्तम्भः स्तम्भ इत्यादिधारावाहिकं ज्ञानं त्वेकमेव । नन्वागमबलाज्ज्ञानस्य नित्यत्वाङ्गीकारे कथं जागरसुषुप्त्यादिभेदसिद्धिरिति चेन्न । यथा दाहकस्य वह्नेर्दाह्यसंनिधौ मण्यादिप्रतिबन्धके दाहाभावः । तद्वज्ज्ञानस्य तिरोधायक-

'प्रज्ञा च तस्मात्प्रसृता पुराणी' ( श्वे. ४।१८ ) इति श्रुतिस्वरसासिद्धम् । नन्वाकाशवदमूर्तत्वाद्गुणत्वाच्च ज्ञानस्य कथं क्रियावत्त्वमिति चेत् । किमिदममूर्तत्वम् । क्रियारहितत्वमिति चेदन्योन्याश्रयः । स्पर्शरहितत्वमिति चेद्व्यभिचारितो हेतुः । स्पर्शरहितेऽपि शब्दे क्रियादर्शनात् । स खलु शङ्खमुखादेर्दवीयसोऽपि देशान्नोदनविशेषेण लोष्टादिरिव यावद्वेगं प्रतिष्ठते । ज्ञानस्य गुणत्वेऽपि द्रव्यत्वस्याग्रे वक्ष्यमाणत्वात्क्रियावत्त्वमविरुद्धम् । एतेनाऽऽत्मधर्मभूतज्ञानस्य स्वाश्रयादन्यत्र कथं गमनमिति परास्तम् ।

स्वत एवेति । तदुक्तं सर्वार्थसिद्धौ—घटोऽस्तीति ज्ञानमुत्पद्यते । तत्र विषयास्तित्वमेव प्रामाण्यम् । तत्तु तेनैव ज्ञानेन प्रतीयते । अतः स्वतः प्रामाण्यं प्रतीयते । यत्र पुनः शुक्तौ रजतज्ञानमुत्पद्यते तत्रापि 'रजतमस्ति' इति रजतास्तित्वमेव प्रतीयते । न पुनर्नास्तित्वं तेनैव ज्ञानेन प्रतीयते । अतो विषयास्तित्वं स्वेन, नास्तित्वं च बाधकेन प्रतीयत इति स्वतः प्रामाण्यप्रतीतिरप्रामाण्यप्रतीतिः परत इति विभाग इति । किंच यथा जल उष्णस्पर्शस्य न स्वतस्त्वम् । किं तु परतस्त्वम् । तस्य स्वतस्त्वं तु तेजसि प्रसिद्धम् । तथा ज्ञाने प्रमाणत्वस्य यदि परतस्त्वं स्यात्तर्हि तस्यान्यत्र क्वचिदपि स्वतस्त्वमावश्यकम् । तच्च न संभवति । प्रमाणत्वस्य ज्ञानमात्रनिष्ठत्वात् । अतस्तस्य ज्ञाने स्वतस्त्वमेवाङ्गीकार्यमिति समासोक्तौ विस्तरः ॥

एकमेवेति । धारावाहिकविज्ञानं नीरन्ध्रनिर्यातमणिमयूखवदेकरूपम् । तदुक्तं प्रज्ञापरित्राणे—

'स्तम्भः स्तम्भः स्तम्भ इति धीर्धारावाहिका मता ।
धारावाहिकविज्ञानमेकं ज्ञानं मतं हि नः ॥

१ घ. 'चित्करी स्वरसजा' ।

तमोविशेषसंनिधानासंनिधानाभ्यां स्वापादिसिद्धिः। पुंस्त्वादिवच्च। पुंस्त्वादिकं बाल्ये तिरोहितं यौवन आविर्भवति। यो यदाश्रितस्वभावः स तस्य गुण इति लक्षणलक्षितत्वाज्ज्ञानं गुणः। विशेषणादिवत्। यतः संकोचविकाशावस्थावत्, अतो द्रव्यमपि भवति। आत्मगुणभूतज्ञानस्य द्रव्यत्वं कथमिति न शङ्कनीयम्। प्रभावदेकस्यैव द्रव्यत्वगुणत्वयोर्विरोधाभावात्। अवस्थाश्रयो द्रव्यमिति द्रव्यलक्षणम्। स्वाश्रयादन्यत्र वर्तमानत्वमपि प्रभावदेवोपपद्यते। प्रयोगश्च–गुणभूता बुद्धिर्द्रव्यं प्रसारणादिमत्त्वात्प्रभावत्। ज्ञानं द्रव्यं संयोगाद्गुणान्यत्वे सति भावनाकारणत्वादात्मवदिति। मुक्तज्ञानस्य युगपदनन्तदेहसंयोगो नयनसूर्यादितेजोवत्संभवति।

---

प्रतिबन्धांशमोक्षाद्यैर्नित्यं ज्ञानं हि जायते।
चिरमप्रतिबन्धेन चिरं तिष्ठति भासकम्' इति।

अन्ये तु धारावाहिकविज्ञानं स्नेहदशादिसमवायसंतन्यमानदीपवत्संततिरूपमित्याहुः। स्वापादीति। यत्तु षड्र्थसंक्षेपे श्रीराममिश्रैरुक्तम्—स्वतः सिद्धिरियं संवित्सुषुप्तावपि स्फुरत्येव। स्वाश्रयायैव हि सा भाति। अव्यवहारनियमस्तु करणोपरतिनियमादिति। विवरणेऽप्येवमेवोक्तम्। तत्सर्वं प्रौढिवाद इति ज्ञेयम्। अन्यथा 'पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्' (ब्र. सू. २।३।३१) इति सूत्रेण तद्भाष्येण च विरोधात्। तद्ध्वनयन्नाह–पुंस्त्वादीति। किं च यथा सर्वविषयप्रकाशनशीलायाः संविदः समस्तबाह्यविषयवैमुख्यं तथाऽऽन्तरविषयवैमुख्यमपि स्यादेवेति बोध्यम्। द्रव्यमपीति। न तावदस्माकमद्रव्यमेव गुण इति वैशेषिकादिवन्निर्बन्धः। विशेषणादिवत्। यो यदाश्रितस्वभावः स तस्य गुण इति हि गुणलक्षणम्। न तु पारिभाषिकम्। सर्वव्यवहारविरोधात्। अत एवोक्तं यामुनाचार्यैः—

'आश्रयादन्यतो वृत्तेराश्रयेण समन्वयात्।
द्रव्यत्वं च गुणत्वं च ज्ञानस्यैवोपपद्यते' इति।

एवं च केचिद्द्रव्यात्मकगुणाः केचित्केवलगुणा इति द्विविधा गुणाः। पूर्वे ज्ञानादयः। उत्तरे सत्त्वरजःप्रभृतय इति बोध्यम्। अनन्तेति। अत्र च ज्ञाननिष्ठो वेगातिशयः कारणम्। दृष्टं च विचित्रवेगित्वं नायनतापनादिमहसाम्। तच्च काष्ठाप्राप्तं युगपत्त्रिचतुरक्षणेन वा विश्वमास्कन्दते।

---

१ ख. °शमन्य°। २ क. सहो न°। ३ घ. °योगः सात्र°।

ज्ञानं, मतिः, प्रज्ञा, संवित्, धिषणा, धीः, मनीषा, शेमुषी, मेधा, बुद्धिरित्यवेमादयः शब्दा ज्ञानपर्यायाः। बुद्धिरेवोपाधिभेदात्सुखदुःखेच्छाद्वेषप्रयत्नरूपा। सुखादिजनकतया ज्ञानातिरेके प्रमाणाभावात्। 'इच्छामि द्वेष्मि' इति व्यवहारस्य स्मरामीत्यादिवज्ज्ञानविशेषेणैवोपपत्तेः। ननु कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवेत्युक्तम्। ज्ञानरूपत्वं कथमिति चेन्न। ज्ञानस्य मनःसहकारित्वनियमान्मन एवेत्युपचाराद्युक्तमिति न विरोधः।

एवं मत्यक्षानुमानागमस्मृतिसंशयविपर्ययभ्रमविवेकव्यवसायमोहरागद्वेषमदमात्सर्याधैर्यचापल्यदम्भलोभक्रोधदर्पस्तम्भद्रोहाभिनिवेशनिर्वेदानन्दादयः

---

सुखादीति। सुखादिजनकतया सुखादिव्यतिरिक्तज्ञानाङ्गीकारे प्रमाणाभावादित्यर्थः। एतदुक्तं भवति—विषयज्ञानानि विषयाधीनविशेषाणि सुखदुःखमध्यस्थसाधारणानि भवन्ति। तत्र येन विषयविशेषेण विशेषितं ज्ञानं सुखस्य जनकमित्यभिमतं तद्विषयज्ञानमेव सुखम्। तदतिरेकिपदार्थान्तरं नोपलभ्यते। तेनैव च सुखित्वव्यवहारोपपत्तेरिति। उपपत्तेरिति। वैषयिकसुखदुःखस्वरूपत्वं च ज्ञानस्य विषयाधीनमिति विषयस्यापि सुखदुःखशब्दवाच्यत्वमस्त्येवेति सुखं स्वर्ग इत्यादिव्यवहारोपपत्तिः। अत एव वेदार्थसंग्रहे 'विषयायत्तत्वाज्ज्ञानस्य सुखरूपतया ब्रह्मैव सुखम्' इत्युक्तम्।

एवं मत्यक्षेति। स्मृतिर्नाम पूर्वानुभवजन्यसंस्कारमात्रजन्यं ज्ञानम्। अनध्यवसायो ज्ञानं संशयः। विपर्ययोऽन्यथाज्ञानम्। तच्च धर्मविपर्यासरूपम्। भ्रमो धर्मिविपर्यासः। संदेहानन्तरं जायमान ऊहो विवेकः। व्यवसाय उद्यमः। भयादिजन्यं वस्तुतत्त्वानवधारणं मोहः। रागो विषयानुबुभूषा। द्वेषो विषयजिहासा। विषयानुभवजन्यो ज्ञानविशेषो मदः। स्वप्रयोजनप्रतिसंधानं विना पराभिमतनिवारणेच्छा मात्सर्यम्। आरब्धायाः क्रियाया विघ्नोपनिपातेऽपि तत्समापनसामर्थ्यं धैर्यम्। तदभावोऽधैर्यम्। चापल्यं चञ्चलता। धार्मिकत्वख्यापनाय धर्मानुष्ठानं दम्भः। धर्मविरोधेन परद्रव्येच्छा लोभः। तदुक्तं पद्मपुराणे—

'परवित्तादिकं दृष्ट्वा नेतुं यो हृदि जायते।
अभिलाषो द्विजश्रेष्ठ स लोभः परिकीर्तितः' इति।

परपीडाफलकश्चित्तविकारः क्रोधः। कृत्याकृत्याविवेककरो विषयानुभवनिमित्तो हर्षो दर्पः। स्तम्भोऽनारम्भशीलत्वम्। परेषु स्वच्छन्दवृत्तिनिरोधो द्रोहः।

---

१ क. घ. °कज्ञा°। २ क. ग. घ. °त्सर्यचा°। ३ घ. °पलद°।

सुमतिर्दुर्मतिसुप्रीतितुष्ट्युन्नतिशान्तिविरक्तिरतिमैत्रीदयामुमुक्षालज्जातितिक्षाविचारणाजिगीषामुदिताक्षमाचिकीर्षाजुगुप्साभावनाकुहनाऽसूयाजिघांसातृष्णा-दुराशावासनाचर्चाश्रद्धा भक्तिः प्रपत्तिरित्येवमादयश्च जीवगुणा अनन्ता धर्मभूतज्ञानावस्थाविशेषा एव । एवं ज्ञानशक्तिबलैश्वर्यवीर्यतेजःसौशील्यवात्सल्यमार्दवार्जवसौहार्दधैर्यसाम्यकारुण्यमाधुर्यगाम्भीर्यौदार्यस्थैर्यपराक्रमादयो भगवतोऽनन्तकल्याणगुणा ज्ञानशक्तिविततिभूताः ।

तत्र ज्ञानं नाम सर्वसाक्षात्काररूपम् । शक्तिरघटितघटनासामर्थ्यम् । बलं धारणसामर्थ्यम् । ऐश्वर्यं नियमनसामर्थ्यम् । वीर्यमविकारित्वम् । तेजः पराभिभवसामर्थ्यम् । महतो मन्दैः सह नीरन्ध्रेण संश्लेषस्वभावत्वं सौशील्यम् । वात्सल्यं दोषेऽपि गुणत्वबुद्धिर्दोषादर्शित्वं वा । आश्रितविरहासहत्वं मार्दवम् । मनोवाक्कायैकरूपमार्जवम् । स्वसत्तानपेक्षतद्रक्षापरत्वं सौहार्दम् ।

---

अभिनिवेश आग्रहः । आक्रोशनावज्ञादिजनितो विषयद्वेषाख्यश्चित्तविकारो निर्वेदः । इष्टप्राप्त्यादिजन्मा सुखविशेष आनन्दः । सुमतिः समीचीना मतिः । तद्विपरीता मतिर्दुर्मतिः । सुप्रीतिः प्रियत्वम् । सर्वेषु दृष्टेषु तोषस्वभावत्वं तुष्टिः । पराक्रमदानादिस्मृतिजन्य उत्साह उन्नतिः । इन्द्रियाणां विषयप्रावण्यनिरोधसंशीलनं शान्तिः । दोषदर्शनाद्विषयत्यागेच्छा विरक्तिः । प्रेमाख्यश्चित्तविकारो रतिः । मैत्री मित्रत्वम् । भूतेषु सर्वेषु दुःखासहिष्णुत्वं दया । मुमुक्षा मोक्षेच्छा । अकार्यकरणादिजन्यो ज्ञानविशेषो लज्जा । परपीडानुभवेऽपि तत्सहनेच्छा तितिक्षा । विचारणा सद्विचारप्रवृत्तिः । जिगीषा जयेच्छा । भोग्यवस्तुदर्शनजश्चित्तविकारो मुदिता । परनिमित्तपीडानुभवेऽपि चित्तविकाररााहित्यं क्षमा । चिकीर्षा क्रियाविषयेच्छा । कदर्यवस्तुविलोकनादिजन्यश्चित्तविकारविशेषो जुगुप्सा गोपनेच्छा वा । भावना संस्कारविशेषः । कुहना विस्मापना वञ्चना वा । गुणेषु दोषाविष्करणमसूया । जिघांसा हननेच्छा । तृष्णाऽभिलाषविशेषो धर्माविरोधेन परद्रव्येच्छारूपः । दुराशा दुरिच्छा । वासना संस्कारविशेषः । चर्चा पूजा । श्रद्धा विश्वासः । भक्तिप्रपत्त्योः स्वरूपमनुपदं वक्ष्यते । ज्ञानावस्थाविशेषा इति । तेषु च ज्ञानजन्यत्वादिना कश्चिद्भेदप्रतिभासेऽपि ज्ञानातिरिक्ततदङ्गीकारे प्रमाणाभावाद्गौरवाच्चेत्याशयः । पराक्रमादय इति । आदिना क्षमादिसंग्रहः ।

---

१ घ. 'शादुर्मति' । २ क. 'प्रतिप' । ३ ख. °णादयो हा° । ४ ग. घ. °शक्त्योर्वित° । ५ ग. °ताः । शा° । ६ ग. घ. °वनशा° । ७ क. °विहास° । ८ ख. °पेक्ष्यं त° ।

जन्मज्ञानवृत्तगुणानपेक्षया सर्वैराश्रयणीयत्वं सौम्यम्। आश्रितदोषगोपनं चातुर्यम्। अकम्पनीयत्वं स्थैर्यम्। अभग्नप्रतिज्ञत्वं धैर्यम्। परबलप्रवेशनसामर्थ्यं शौर्यम्। तन्निराकरणं पराक्रमः। स्वप्रयोजनमनपेक्ष्य परदुःखनिराचिकीर्षा दया परदुःखदुःखित्वं वा। क्षीरवदुपाध्यभावेऽपि स्वादुत्वं माधुर्यम्। भक्तानुग्रहवदान्यत्वादेरामूलतो दुरवगाहत्वं गाम्भीर्यम्। भूतं दत्त्वाऽप्यतृप्तत्वमौदार्यम्। एवं वदान्य इत्यादावप्यूह्यम्।

ज्ञानविशेषभूतयोर्भक्तिप्रपत्त्योः स्वरूपं किंचिदुच्यते—भक्तिप्रपत्तिभ्यां प्रसन्न ईश्वर एव मोक्षं ददाति। अतस्तयोरेव मोक्षोपायत्वम्। मोक्षोपायत्वे·

भक्तिप्रपत्तिभ्यामिति। अत एव 'भक्त्या त्वनन्यया लभ्यः' (गी. ११।५४) इति संगच्छते। महनीयविषये प्रीतिर्भक्तिः। सैवावस्थाभेदात्परमभक्त्यादिरूपतां भजते। सा चान्तरिक्षान्तरादित्यदहरभूमसन्मधुपकोसलशाण्डिल्योद्गीथपुरुषप्रतर्दनवैश्वानरादिविद्याभेदाद्बहुधा। नन्वेव भक्तेर्मोक्षसाधनत्वे 'तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (श्वे. ३।८) इति श्रुतिविरोध इति चेन्न। एतासां विद्यानां बुद्धिविशेषरूपत्वात्। तयोरेवेति। तथा च भक्तिरूपापन्नोपासनध्यानवेदनादिशब्दवाच्योऽसकृदावृत्त आप्रायणादन्वहमनुवर्तमानो ज्ञानविशेषो मोक्षहेतुरिति कर्माङ्गकस्य ज्ञानस्य मोक्षहेतुत्वं सिद्धम्। न केवलस्य कर्मणः। नापि ज्ञानसमुच्चितस्य। श्रुतौ वेदनमेव विधायोपायान्तरनिषेधेन तद्विरोधात्। वेदनाङ्गतया कर्मानुप्रवेशे तु न विरोधः। तथा सति तस्योपायान्तरत्वाभावात्। न च कर्मानुप्रवेशरहितस्य केवलस्यैव ज्ञानस्य मोक्षहेतुत्वमस्त्विति वाच्यम्। तस्याध्ययनविधिसिद्धसाङ्गसशिरस्काध्ययनगृहीताक्षरराशिविशेषापातप्रतीतनिरतिशयपुरुषार्थसाधनार्थनिर्णयरागप्राप्तश्रवणमात्रेण निष्पन्नस्याविधेयत्वात्। तावति सिद्धेऽपि मोक्षादर्शनाच्च। तदुक्तमापस्तम्बेन—'बुद्धे क्षेमप्रापणम्। तच्छास्त्रैर्विप्रतिषिद्धम्। बुद्धे चेत्क्षेमप्रापणमिहैव न दुःखमुपलभेत' (आ. ध. सू. २।९।२१।१४-१६)। अस्यार्थः—'आत्मनि बुद्धे ज्ञाते सति तज्ज्ञानमेव क्षेमं मोक्षं प्रापयति' इति यदौडुलोमिनोक्तं तच्छास्त्रैर्विप्रतिषिद्धम्। शास्त्रेषु हि वाक्यार्थज्ञानोत्तरं ध्यानविधिर्बोध्यते। 'यावदायुषम्' इति मरणपर्यन्तं ध्यानानुवृत्तिश्च प्रतिपाद्यते। 'यावन्न विमोक्ष्ये' (छा. ६।१४।२) इति शरीरपातावधिश्च मोक्षस्य क्रियते। 'तयोर्ध्वमायन्नमृतत्वमेति' (छां. ८।६।६) इति नाडीविशेषनिष्क्रमणं

१ ख °वृत्तं गु°। २ ख °सामर्थ्यम्°। ३ घ. °त्वादिमत्त्वं दु°। ४ घ. प्रभुत्व द°।

नोक्तानां कर्मयोगज्ञानयोगप्रभृतीनां भक्तिद्वारैव साधनत्वम्। कर्मयोगो नामो-पदेशाज्जीवपरयाथात्म्यज्ञानवता शक्त्यनुसारेण फलसङ्गरहितनिषिद्धका-म्यनित्यनैमित्तिकरूपपरिगृहीतकर्मविशेषः। स तु देवार्चनतपस्तीर्थदानयज्ञा-दिभेदभिन्नः। अयं तु जीवगतकल्मषापनयनद्वारा ज्ञानयोगमुत्पाद्य तद्द्वारा साक्षाद्वा भक्त्युत्पादको भवति। ज्ञानयोगो नाम कर्मयोगान्निर्मलान्तःकरण-स्येश्वरशेषत्वेन प्रकृतिवियुक्तस्वात्मचिन्ताविशेषः। एतस्य साक्षाद्भक्त्युपयो-गित्वम्। एवं साधनान्तराणामपि भक्त्युपयोगित्वमूह्यम्।

भक्तियोगो नाम यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरू-पाष्टाङ्गवांस्तैलधारावदविच्छिन्नस्मृतिसंतानरूपः। स च विवेकविमोकाभ्यास-

---

च मोक्षाङ्गत्वेन कथ्यते। अर्चिरादिमार्गेण गतिश्च मोक्षात्पूर्वं श्रूयते। दोषान्तरमाह—दुःखेचेदिति। न दुःखमिति। न हि ज्ञानिनां मूर्धाभिषिक्तोऽपि सुधाढ्दुःख-मेव तावत्क्षणमात्रं सोढुं प्रभवतीति। भक्तिद्वारैवेति। तदुक्तं न्यायसिद्धाञ्जने—'भक्तियोगः परमप्राप्त्युपायभूतः। तदशक्तस्य तद्भक्तियोगसिद्ध्यर्थमात्मावलोकनम-पेक्षितम्। तस्य च ज्ञानयोगकर्मयोगौ द्वौ पृथगुपायौ। तत्र ज्ञानयोगः स्वात्मावलो-कनेऽन्तरङ्गः। तथाऽपि प्रथमं स दुष्करः। तदनधिकारिणस्तुल्यफलः कर्मयोग एव कार्यः। तदधिकारिणोऽपि व्यपदेश्यस्य लोकसंग्रहार्थं कर्मयोग एव कार्यः। अशक्तस्य ज्ञानयोगशक्तिं कर्मयोग एवोत्पादयति। तदा कर्मयोगं परित्यज्य ज्ञान-योगमनुतिष्ठतोऽपि न दोषः' इति।

यमनियमेति। यमादीनां स्वरूपं योगसूत्रे प्रतिपादितम्। तथाहि—'अहिंसा-सत्यास्तेयब्रह्मचर्यापरिग्रहा यमः' ( यो० सू० २। ३० )। 'शौचसंतोषतपःस्वाध्या-येश्वरप्रणिधानानि नियमः' ( यो० सू० २। ३२ )। 'स्थिरसुखमासनम्' ( यो० सू० २। ४६ )। आस्यतेऽनेनेत्यासनं पद्मासनादि। तद्यदा स्थिरं निष्कम्पं सुखम-नुद्वेजनीयं च भवति तदा तद्योगाङ्गतां भजत इत्यर्थः। 'तस्मिन्सति श्वासप्रश्वासयो-र्गतिविच्छेदः प्राणायामः' (यो० सू० २। ४९)। तस्मिन्सति आसनस्थैर्ये सतीत्यर्थः। 'स्वस्वविषयसंप्रयोगाभावे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः' ( यो० सू० २। ५४ )। इन्द्रियाणि स्वस्वविषयेभ्यः प्रत्याह्रियन्ते प्रतिकूलतया ह्रियन्ते यस्मिन्निति प्रत्याहारः। चक्षुरादीन्द्रियाणां रूपादिविषयप्रवृत्त्यभावे सति, इन्द्रि-याणि चित्तस्वरूपमात्रानुकारीणि यद्भवन्ति स प्रत्याहार इत्यर्थः। 'देशबन्धश्चि-

---

१ ख. 'वत्तया'। २ ग. घ. 'चैतान्'। ३ ग. 'धैयाप्रादा'। ४ घ. 'ज्ञात्कारम'। ५ ख. 'तिष्ठ'। ६ ग. 'विन्दनादि'। ७ ख. 'ध्यानधारणास'।

क्रियाकल्याणानवसादानुद्धर्षरूपसाधनसप्तकजन्यः । तत्र विवेको नाम जात्याश्रयनिमित्तादुष्टादन्नात्कायशुद्धिः । विमोकः कामानभिष्वङ्गः । अभ्यासः पुनःपुनरालम्बनसंशीलनम् । शक्तितः पञ्चमहायज्ञाद्यनुष्ठानं क्रिया । कल्याणानि सत्यार्जवदयादानाहिंसादीनि । अनवसादो दैन्याभावः । अनुद्धर्षस्तुष्ट्यभावः । अतिसंतोषश्च विरोधीत्यर्थः ।

एवं साधनसप्तकानुगृहीता भक्तिर्दर्शनसमानाकाराऽन्तिमप्रत्ययावधिका च भवति । स चान्तिमप्रत्यय एतच्छरीरावसाने शरीरान्तरावसाने वा भवति । वेदनध्यानोपासनादिशब्दवाच्या भक्तिः परभक्तिपरज्ञानपरमभक्तिरूपक्रमवती प्रपत्त्यङ्गका च । सा द्विविधा—साधनभक्तिफलभक्तिभेदात् । उक्तसाधनजन्या साधनभक्तिः । फलभक्तिस्त्वीश्वरकृपाजन्या श्रीपराङ्कुशनाथादिनिष्ठा । मद्भक्तजनवात्सल्यमित्यादिषु स्तुतिनमस्कारादिषु च भक्तिशब्दप्र-

---

त्तस्य धारणा' ( यो० सू० ३ । १ ) । ध्येयस्वरूपे देशे चित्तस्य बन्धो विषयान्तरपरिहारेण यत्स्थिरीकरणं सा चित्तस्य धारणेत्यर्थः । 'तत्र प्रत्ययैकतानता ध्यानम्' ( यो० सू० ३ । २ ) । तत्र ध्येयस्वरूपे प्रत्ययस्य ज्ञानस्यैकतानता तदालम्बनतयैव निरन्तरमुत्पत्तिर्ध्यानमित्यर्थः । 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः' ( यो० सू० ३ । ३ ) । सम्यगाधीयत एकाग्रीक्रियते यत्र मनः स समाधिरिति । साधनसप्तकेति । अत्र विवेकादिषु कारणत्वं व्यासज्यवृत्ति । न तु प्रत्येकपर्याप्तम् । जातीति । जातिदुष्टं कलञ्जगृञ्जनादि । आश्रयदुष्टं पतितादिस्वामिकम् । निमित्तदुष्टमुच्छिष्टादि । एतत्त्रिविधदोषरहितादन्नात्कायशुद्धिर्विवेक इत्यर्थः । आलम्बनेति । आलम्बनं शुभाश्रयस्तस्य संशीलनं पुनः पुनः परिशोधनम् । सत्येति । सत्यं भूतहितम् । आर्जवं वाक्कायानामैकरूप्यम् । दया स्वार्थनिरपेक्षपरदुःखासहिष्णुत्वम् । दानं लोभराहित्यम् । अहिंसा कायेन वाचा मनसा च परपीडानिवृत्तिः । आदिपदादनभिध्यासंग्रहः । अभिध्या परकीये स्वबुद्धिः । यद्वा निष्फलचिन्ता । अथवा परकृतापराधचिन्ता । तद्राहित्यमनभिध्या । दैन्येति । दैन्यं चाभीष्टकार्यप्रवृत्त्यक्षमत्वम् । तच्च देशकालवैषम्याच्छोकवस्त्वाद्यनुस्मृतेश्च भवति ।

प्रपत्त्यङ्गकेति । प्रपत्त्यङ्गभूतेत्यर्थः । साधनभक्तिरिति । सा च व्यासादिनिष्ठा । श्रीपराङ्कुशनाथादीति । पराङ्कुशनाथश्चायं श्रीरामानुजाचार्यात्प्राचीनतमस्ताम्रपर्णी-

---

१ घ. 'त्यादष्टु' । ख. 'त्ययुष्यद' । २ घ. 'रमज्ञा' । ३ ख. 'रमा भक्तिरूपक्रिया क्रमवती प्रपत्त्यङ्गिका च' । ४ ख. घ. 'न्या च' ।

योग औपचारिकः। ननु वेदान्तेषु श्रवणमननयोरपि विधानात्कथं ध्यानमेव विधीयत इति चेदुच्यते—अधीतसाङ्गवेदः पुरुषः प्रयोजनवदर्थाववोधित्वदर्शनात्तन्निर्णयाय स्वयमेव श्रवणे प्रवर्तत इति श्रवणस्य प्राप्तत्वादनुवादः। श्रवणप्रतिष्ठार्थत्वान्मननस्याप्यनुवादः। तस्माद्ध्यानमेव विधीयत इति न विरोधः।

ध्यानशब्दवाच्या भक्तिर्विद्याभेदाद्बहुविधा। काश्चन विद्या उच्यन्ते—अन्तरिक्षविद्या, अन्तरादित्यविद्या, दहरविद्या, भूमविद्या, सद्विद्या, मधुविद्या, उपकोसलविद्या, शाण्डिल्यविद्या, उद्गीथविद्या, पुरुषविद्या, प्रतर्दनविद्या, वैश्वानरविद्या इत्यादिका ब्रह्मविद्याः। न्यासविद्या प्रपत्तिः। प्रपत्तिर्नाम—

'आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम्।
रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा'॥ आत्मनिक्षेपकार्पण्यम्।

इत्याद्यङ्गपञ्चकयुक्ता। एतद्देहावसाने मोक्षप्रदा सकृत्कर्तव्या न्यासः शरणागतिरित्यादिशब्दैर्वेद्या ज्ञानविशेषरूपा। एषा प्रपत्तिर्गुरुमुखाद्रहस्यशास्त्रेषु संप्रदायतया वेदितव्येतीह बालबोधनार्थे प्रवृत्ते ग्रन्थे न प्रकाश्यते विरम्यते।

तीरनिवासीति प्रसिद्धिः। वेदान्तेष्विति। 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यः' (बृ० २। ४। ५) इति श्रुतौ श्रवणमननयोर्विधिरस्तीति शङ्काशयः। प्रयोजनवदिति। स्वाध्यायस्य स्वभावत एव प्रयोजनवदर्थाववोधित्वदर्शनादित्यर्थः। श्रवणस्य प्राप्तत्वादिति। ननु पुस्तकनिरीक्षणादिव्यावृत्त्यर्थं श्रोतव्य इति विधिः किं न स्यादिति चेन्न। वेदान्तवाक्यानामपि पुस्तकनिरीक्षणादिव्युदासस्याध्ययनविधिसिद्धत्वात्। विलेखनपठनादिप्रतिषेधस्तु ब्रह्ममीमांसायामनिष्ट एव। न च गुरूपसत्त्यर्थमयं विधिरस्त्विति वाच्यम्। गुरूपसत्तौ श्रवणशब्दस्य मुख्यार्थत्वाभावात्। तस्याश्चात्राविहितत्वेऽपि 'गुरुमेवाभिगच्छेत्' (मुं० १। २। १२) इति वाक्यान्तरसिद्धत्वाच्च। श्रवणप्रतिष्ठार्थत्वादिति। आचार्योपदिष्टस्यार्थस्य स्वात्मन्येवमेव युक्तमिति हेतुतः प्रतिष्ठापनमेव मननमिति भावः। एतेन मन्तव्य इत्यारम्भणसंशीलनरूपमननविधिरयमित्यपास्तम्। श्रवणशब्दस्य न्यायोपेतवाक्यजन्यज्ञान इव मननशब्दस्य तत्प्रतिष्ठापनेऽर्थे प्रसिद्धिप्राचुर्यात्।

एतद्देहावसान इति। न च प्रारब्धकर्मणोऽसमाप्तत्वे देहान्तरस्यापि प्रसङ्ग इति वाच्यम्। प्रपत्तौ प्रारब्धस्यापि नाशाङ्गीकारात्। यथाऽऽहुः—

१ घ. °न्ते श्र°। २ क. °धान्यत°। ३ ग. °व्द वाच्या ज्ञा°। ४ घ. °पा। प्र°। ५ क. °प्रविष्ट°। ६ ग. °वृत्तगुम्फे न°।

भक्तिप्रपत्त्योरेव मोक्षसाधनत्वेन स्वीकारात्परोक्तोपायनिरासः। यथा वेदबाह्यानां मध्ये केषांचिन्मते देहातिरिक्तात्मनोऽनङ्गीकारान्मोक्षे प्रवृत्तिरेव न संभवति। अन्येषां मते ज्ञानस्य क्षणिकत्वाच्चस्यैवाऽऽत्मत्वात्कस्य प्रवृत्तिः। संतानस्येति चेन्न। अन्यं प्रत्यन्येन यत्नो न कर्तव्य इति न प्रवृत्तिः। अपरेषां मते धर्माधर्मादिसप्तभङ्गीरीत्याऽनैकान्तवादान्न प्रवृत्तिः। वैशेषिकादिपक्षे

' साधनं भगवत्प्राप्तौ स एवेति स्थिरा मतिः।
साध्यभक्तिस्तथा सैव प्रपत्तिरिति गीयते॥
उपायो भक्तिरेवेति तत्प्राप्तौ या तु सा मतिः।
उपायभक्तिरेतस्याः पूर्वोक्तैव गरीयसी॥
उपायभक्तिः प्रारब्धव्यतिरिक्ताघनाशिनी।
साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्यापि भूयसी ' इति।

यद्यप्येवं प्रपत्तिः प्रारब्धमपि निःशेषं विनाशयितुं शक्ता तथाऽपि निःशेषवैराग्याभावे रागविषयमंशं तदनुबन्धि दुःखं च स्थापयति। निःशेषवैराग्ये तु निःशेषं निवर्तयति। अयमेव परमैकान्तिनोर्दृप्तार्तयोर्भेद इत्याहुः।

केषांचिन्मते। चार्वाकाणां मते। अन्येषाम्। विज्ञानवादिनां बौद्धानाम्। अपरेषाम्। जैनानाम्। सप्तभङ्गीरीत्येति। सप्तभङ्गाश्च स्याद्वादमञ्जर्यां प्रतिपादिताः। तथाहि—एकत्र जीवादौ वस्तुन्येकैकसत्त्वादिधर्मविषयप्रश्नवशादविरोधेन प्रत्यक्षादिबाधापरिहारेण पृथग्भूतयोः समुदितयोश्च विधिनिषेधयोः पर्यालोचनया कृत्वा स्याच्छब्दलाञ्छितो वक्ष्यमाणैः सप्तभिः प्रकारैर्वचनविन्यासः सप्तभङ्गीति गीयते। तद्यथा—स्यादस्त्येव सर्वमिति विधिकल्पनया प्रथमो भङ्गः। स्यान्नास्त्येव सर्वमिति निषेधकल्पनया द्वितीयः। स्यादस्त्येव स्यान्नास्त्येवेति क्रमतो विधिनिषेधकल्पनया तृतीयः। स्यादवक्तव्यमेवेति युगपद्विधिनिषेधकल्पनया चतुर्थः। स्यादस्त्येव स्यादवक्तव्यमेवेति विधिकल्पनया युगपद्विधिनिषेधकल्पनया च पञ्चमः। स्यान्नास्त्येव स्यादवक्तव्यमेवेति निषेधकल्पनया युगपद्विधिनिषेधकल्पनया च षष्ठः। स्यादस्त्येव स्यान्नास्त्येव स्यादवक्तव्यमेवेति क्रमतो विधिनिषेधकल्पनया युगपद्विधिनिषेधकल्पनया च सप्तमः। स्वद्रव्यक्षेत्रकालभावरूपेणास्त्येव सर्वं कुम्भादि। न पुनः परद्रव्यक्षेत्रकालभावरूपेण। तथाहि—कुम्भो द्रव्यतः पार्थिवत्वेनास्ति नाबादिरूपत्वेन। क्षेत्रतः पाटलिपुत्रकत्वेन, न कान्यकुब्जादित्वेन। कालतः शिशिरत्वेन, न वासन्तिकत्वेन। भावतः श्यामत्वेन, न रक्तादित्वेन। अन्यथेतररूपापत्त्या स्वरूपहानिप्रसङ्ग इति। अवधारणं चात्र भङ्गेऽन-

१ क. 'प्रतिप'। २ क. 'त्वात्क'। ३ घ. 'त्या द्वने'।

पाषाणकल्पे मोक्षे प्रवृत्तिः कस्यापि न संभवति । सांख्यादिपक्षेष्वीश्वरानङ्गीकारात्पुरुषस्य प्रकृतेर्वा मोक्ष इति संशयान्न प्रवृत्तिः । मायिमते व्यावहारिकवाक्यस्य पारमार्थिकाभेदज्ञानाजनकत्वान्न प्रवृत्तिः । भास्करयादवयोस्तु कर्मज्ञानसमुच्चयवादोऽप्युक्तादेव निरस्तः । शैवमते तु पशुपतेः प्राप्यत्वस्वीकाराद्वेदविरुद्धभस्मधारणादेः साधनत्वेन स्वीकाराच्च तन्निरासः । एवं मतिर्निरूपिता ॥

इति श्रीवाधूलकुलतिलकश्रीमन्महाचार्यस्य प्रथमदासेन श्रीनिवासदासेन विरचितायां यतीन्द्रमतदीपिकायां बुद्धिनिरूपणं नाम सप्तमोऽवतारः ॥ ७ ॥

---

भिमतार्थव्यावृत्त्यर्थमुपात्तम् । इतरथाऽनभिमततुल्यतैवास्य प्रसज्येत । प्रतिनियतस्वार्थानभिधानात् । तदुक्तम्—

'वाक्येऽवधारणं तावदनिष्टार्थनिवृत्तये ।
कर्तव्यमन्यथाऽनुक्तसमत्वात्तस्य कुत्रचित्' इति ।

तथाऽप्यस्त्येव कुम्भ इत्येतावन्मात्रोपादाने कुम्भस्य स्तम्भाद्यस्तित्वेनापि सर्वप्रकारेणास्तित्वप्राप्तेः प्रतिनियतस्वरूपानुपपत्तिः स्यात् । तत्प्रतिपत्तये स्यादिति शब्दः प्रयुज्यते । स्यात्कथंचित् । स्वद्रव्यादिभिरेवायमस्ति न परद्रव्यादिभिरपीत्यर्थः । यत्रापि चासौ न प्रयुज्यते तत्रापि व्यवच्छेदफलैवकारवद्बुद्धिमद्भिः प्रतीयत एव । यथोक्तम्—

'सोऽप्रयुक्तोऽपि वा तज्ज्ञैः सर्वत्रार्थात्प्रतीयते ।
यथैवकारोऽयोगादिव्यवच्छेदप्रयोजनः' इति ।

तथा चैनन्मतेऽनैकान्तवादात्सर्वत्रानिश्चयान्न क्वापि प्रवृत्तिः स्यादित्याशयः । मायिमते । शंकराचार्यमते । व्यावहारिकवाक्यस्य । व्यावहारिकसत्यस्य वाक्यस्य । मायिमते हि ब्रह्मण एव पारमार्थिकसत्यत्वं नान्यस्य कस्यापीति तत्त्वमस्यादिवाक्यस्यापि व्यावहारिकसत्यत्वमेव । तथा च यथा प्रातिभासिकसर्पादेर्व्यावहारिकविषाद्यजनकत्वं तथा व्यावहारिकवाक्यस्यापि पारमार्थिकज्ञानाजनकत्वमेव स्यादिति भावः ॥

इति श्रीयतीन्द्रमतदीपिकाप्रकाशे सप्तमोऽवतारः ॥ ७ ॥

---

१ घ. 'कस्य' । २ ग. घ. 'दवोक्त' ।

अथाष्टमोऽवतारः ।

अथ जीवो निरूप्यते—प्रत्यक्त्वचेतनत्वात्मत्वकर्तृत्वादीनीश्वरजीवसाधारणानि लक्षणानि । प्रत्यक्त्वं नाम स्वयमेव स्वस्मै भासमानत्वम् । चेतनत्वं ज्ञानाश्रयत्वम् । आत्मत्वं शरीरप्रतिसंबन्धित्वम् । कर्तृत्वं संकल्पज्ञानाश्रयत्वम् । एवं सामान्यलक्षणलक्षितस्य विशेषलक्षणान्युच्यन्ते—अणुत्वे सति चेतनत्वम् । स्वतः शेषत्वे सति चेतनत्वम् । एवमाधेयत्वविधेयत्वपराधीनकर्तृत्वपरतन्त्रत्वादिकमूह्यम् ।

स च देहेन्द्रियमनःप्राणादिभ्यो विलक्षणः । यथा मम शरीरमिति प्रतीत्या देहाद्व्यावृत्तः ।

अथाष्टमोऽवतारः ।

शेषत्वे सतीति । शेषत्वं च यथेष्टविनियोगार्हत्वम् । चेतनत्वमात्रोक्तावीश्वरेऽतिव्याप्तिः । शेषत्वमात्रोक्तावचित्पदार्थेष्वतिव्याप्तिरत उभयोपादानम् । जीवश्चायं परमात्मना स्वेच्छानुसारेण विनियुज्यत एवेति लक्षणसमन्वयः । आधेयत्वेति । आधेयत्वमाश्रितत्वम् । विधेयत्वं नियाम्यत्वम् ।

देहाद्व्यावृत्त इति । चार्वाकास्तु देह एवाऽऽत्मेति वदन्ति । अत एव स देहावधिकः । न तु देहोत्पत्तेः पूर्वं देहनाशानन्तरं वा तस्य स्थितिः । देहात्मवादे प्रमाणं त्वहं जानामीति प्रत्ययः । ज्ञाता ह्यात्मा अहमिति चकास्ति । देहश्चाहंकारगोचरः । स्थूलोऽहं कृशोऽहमिति दर्शनात् । देहस्य हि स्थौल्यादियोगः । अतस्तत्समानाधिकरणतयाऽयमहंकारः शरीरालम्बन इत्यवश्याश्रयणीयम् । यद्यपि भौतिकेषु काष्ठलोष्टादिषु चैतन्यं नोपलभ्यते तथाऽपि भूतचतुष्टयसंघातात्मकदेहे चैतन्याविर्भावो नानुपपन्नः । यथा क्रमुकफलताम्बूलदलादिष्ववयवेषु प्रत्येकमविद्यमानोऽपि रागः संयोगविशेषादवयविन्याविर्भवति तद्वत् । परं त्वेतदरमणीयम् । इदं शरीरमिति शरीरविषयिणी मतिः पराग्वृत्तिः । अहं जानामीति प्रत्यग्वृत्तिरहमिति मतिः । सा चेदंकारगोचराद्भिन्नमेव स्वविषयमुपस्थापयति । तदुक्तम्—

'न खल्वहमिदंकारावेकस्यैकत्र वस्तुनि' इति ।

स्थूलोऽहमित्यादिस्तु लाक्षणिकः प्रयोगः । अत एव ममेदं गृहमितिवन्ममेदं शरीर-

१ क. ख. ग. 'रीरं प्र' । २ क. 'स्य जीवस्य वि' ।

चक्षुषा पश्यामि श्रोत्रेण शृणोमि वाचा वदामीत्यादिप्रत्ययाद्बाह्येन्द्रियेभ्यो व्यावृत्तः । मनसा जानामीति मनसो ज्ञानकरणत्वप्रतीतेः,

---

मिति भेदप्रतिभासः । किंच चैतन्यमपि देहे नोपपद्यते । कार्यद्रव्यगतविशेषगुणानां कारणगुणपूर्वकत्वात् । ताम्बूलादावपि चर्वणजनितहुतवहसंयोगसंपादितपाटलिमभिः परमाणुभिर्द्व्यणुकादिक्रमेण कारणगुणपूर्वक एव रागोदयः । किंचानुमानेनापि देहस्यानात्मत्वं सिध्यति तथा चोक्तम्—

'उत्पत्तिमत्त्वात्पारार्थ्यात्संनिवेशविशेषतः ।
रूपादिमत्त्वाद्भूतत्वाद्देहो नाऽऽत्मा घटादिवत् ॥
सच्छिद्रत्वाददेहित्वाद्देहत्वान्मृतदेहवत्' इति ।

कि च देहात्मवादे जन्मान्तराभावेनाकृताभ्यागमकृतविप्रणाशदोषप्रसङ्गः । सन्ति हि देहान्तरानुभाव्यस्वर्गस्वाराज्यादिसाधनविधायिन्यः श्रुतयः । किं च जातमात्रो हि जन्तुः स्तन्यादिवाञ्छायुक्तस्तदर्थप्रवृत्त्या निश्चीयते । तदवस्थस्य च रागादयो जन्मान्तरीयसंस्कारोद्बोधमन्तरेण न युज्यन्त इति बोध्यम् ।

चक्षुषेति । इन्द्रियात्मवादिनामयमभिप्रायः—ज्ञानं हीन्द्रियव्यापारफलम् । अतस्तदिन्द्रियसमवाय्येव भवितुमर्हति । ज्ञानाश्रयत्वमेव च चेतनत्वमिति । किं त्वेतदयुक्तम् । चक्षुषा पश्यामीत्यादिप्रतीतिविरोधात् । तत्र हि द्रष्ट्रादिश्चक्षुरादिभ्यो भिन्न एव प्रतीयते । किं चेन्द्रियाणां प्रत्येकं चेतनत्वं संभूय वा । नाऽऽद्यः । इन्द्रियान्तरदृष्टस्येन्द्रियान्तरेण प्रतिसंधानाभावप्रसङ्गात् । अस्ति च तत् 'यमहमद्राक्षं तमहं स्पृशामि' इति । नान्त्यः । न हि पञ्चभिरिन्द्रियैः संभूयैकं वस्त्वनुभूयतेऽनुसंधीयते वा । किंचैकेन्द्रियविगमे मरणप्रसङ्गः । तत्तदिन्द्रियापाये तदिन्द्रियार्थस्मरणानुपपत्तिश्च । तथा चान्धो रूपं न स्मरेत् । बधिरः शब्दं न स्मरेत् । ज्ञानस्येन्द्रियव्यापारजन्यत्वेऽपि शस्त्रादिव्यापारजन्मनः पापादेरिव परसमवायित्वं नानुपपन्नम् । मनसेति । किंच बाह्येन्द्रियेषु यथायथं स्वस्वविषयसंबद्धेष्वपि यतो न युगपत्सर्वे विषयाः प्रतीयन्ते ततोऽवगच्छामः, अस्ति किंचिदपरमपि साधनं यत्साहाय्यकविरहान्न सर्वे विषया युगपत्प्रकाशन्ते किंतु कश्चिदेवैकः प्रतीयत इति मनसः करणत्वसिद्धिः । 'सुखादिसंवेदनानि करणवन्ति क्रियात्वात्, रूपादिज्ञानवत्' इत्यनुमानमप्यत्र प्रमाणम् । तदेवं ज्ञानकरणतयाऽवगतस्य मनसः कथमिव ज्ञाने कर्तृत्वम् । कर्तृत्वं हि स्वातन्त्र्यनियतम् । स्वातन्त्र्यं च स्वच्छन्दानुरोधेन साध्यसिद्ध्यनुगुणोपकरणसंपादनसामर्थ्यम् । करणत्वं तु पारतन्त्र्यनियतम् । पारतन्त्र्यं च पराधिष्ठानाधीनव्यापारत्वम् । ननु प्राण एवाऽऽत्मा । प्राणान्वयिनि शरीरे सात्मकत्वप्रतीतेस्तद-

मम प्राणा इति व्यतिरेकोक्तेः, जानाम्यहमिति ज्ञानाच्च मनःप्राणज्ञानेभ्यो व्यावृत्तः।

स चाणुपरिमाणः। उत्क्रान्त्यादेः श्रवणात्प्रमाणानुसाराच्च। अणुत्वे युगपदनेकविषयानुभवः कथमिति न शङ्कनीयम्। धर्मभूतज्ञानव्याप्त्योपपत्तेः।

---

नन्वयिनि निरात्मकत्वप्रतीतेश्चेत्यत आह—मम प्राणा इति। किंच प्राणो नाऽऽत्मा वायुत्वाद्बाह्यवायुवत्। देहधारणयोग्यतारूपविशेषमापन्नो वायुरेव प्राणः। 'आपोमयः प्राणः' (छां०६।५।४) इति श्रुतिस्त्वाप्यायनपरा। तेजोमयी वागितिवत्। सुषुप्तौ वृत्तिहीनेऽप्यात्मनि प्राणस्य वृत्तिमत्त्वदर्शनाच्च न तस्याऽऽत्मत्वम्। प्राणवृत्त्यैव ह्यशितपीतद्रव्यस्य सुषुप्तावपि सप्तधातुभावेन परिणामः श्वासप्रश्वासौ च भवतः। ननु संविदेवाऽऽत्मा, अजडत्वादत आह—जानामीति। अजडत्वहेतुस्तु नाऽऽत्मत्वसाधक इत्यग्रे बौद्धमतखण्डने स्फुटी भविष्यति।

ननु जीवात्मा विभुः। शरीरव्यापिसुखाद्युपलब्धेः। देशान्तरेऽपि तद्भोग्यवस्तूत्पत्तेश्च। तत्र हि जीवादृष्टं कारणमिति तस्य तत्र संनिधानमपेक्ष्यते। कार्यकारणयोः सामानाधिकरण्यनियमात्। तच्चादृष्टमाश्रयमन्तरेण न संभवतीत्यगत्या जीवात्मनो विभुत्वमङ्गीकार्यमिति चेत्तत्राऽऽह—स चेति। उत्क्रान्त्यादेरिति। तथा च 'उत्क्रान्तिगत्यागतीनाम्' (ब्र. सू. २।३।२०) इति सूत्रे भाष्यम्—उत्क्रान्तिस्तावच्छ्रूयते। 'तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः' (बृ. ४।४।२) इति। गतिरपि 'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' (कौ. १।२) इति। आगतिरपि 'तस्माल्लोकात्पुनरेत्यास्मै लोकाय कर्मणे' (बृ. ४।४।६) इति। विभुत्वे ह्येता उत्क्रान्त्यादयो नोपपद्येरन्निति। तथा

'बालाग्रशतभागस्य शतधा कल्पितस्य च।
भागो जीवः स विज्ञेयः स चाऽऽनन्त्याय कल्पते' (श्वे. ५।९)

'आराग्रमात्रो ह्यवरोऽपि दृष्टः' (श्वे. ५।८)

'स्वरूपमणुमात्रं स्याज्ज्ञानानन्दैकलक्षणम्।
त्रसरेणुप्रमाणास्ते रश्मिकोटिविभूषिताः॥'

इत्यादिश्रुतिस्मृतयाऽप्यत्र प्रमाणतयाऽनुसंधेयाः। प्रमाणेति। हृत्प्रदेशावच्छिन्नोपलम्भस्वारस्येन तादृशप्रमाणानुसारादित्यर्थः। युगपदिति। उशीरादिवासितस्वादुशीतजलपानादौ युगपद्गन्धरसस्पर्शोपलम्भेन युगपदनेकेन्द्रियसंनिधानमात्मनोऽवश्यं वाच्यम्। तच्च विभुत्वमन्तरेण न संभवतीति शङ्काशयः। धर्मेति। यद्यपि जीवात्मनो न सर्वशरीरव्याप्तिस्तथाऽपि तद्धर्मस्य ज्ञानस्य सर्वशरीरव्याप्त्या युगपदनेकविषयानुभवः सेत्स्यति। तथा च श्रुतिः—'प्रज्ञया प्राणं समारुह्य घ्राणेन सर्वान्गन्धानाप्नोति प्रज्ञया चक्षुः समारुह्य चक्षुषा सर्वाणि रूपाणि पश्यति' (कौ. ३।६) इत्यादिः। सूत्रकारैरपि 'गुणाद्वा लोकवत्' (ब्र. सू. २।३।२६) इति सूत्र एवमेवोक्तम्।

एतेनैव सौभरिप्रभृतीनां मुक्तानां च युगपदनेकशरीरपरिग्रहोऽपि संभवति ।

स च नित्यः । पूर्वानुभूतार्थप्रतिसंधानात् । नित्यश्चेज्जीव उत्पन्नो जीवो नष्टो जीव इति प्रतीतिः कथमिति चेन्न । जीवस्य देहसंबन्ध उत्पत्तिस्तद्वियोगो नाश इति प्रतिपादनाज्जीवस्वरूपं नित्यमेव ।

---

सर्वशरीरव्यापिसुखाद्युपलब्धिरपि ज्ञानद्वारैव बोध्या । 'स चाऽऽनन्त्याय कल्पते' ( श्वे. ५।९ ) इत्यत्रोक्तमानन्त्यमपि धर्मभूतज्ञानद्वारैव बोध्यम् । 'नित्यः सर्वगतः स्थाणुः' ( गी. २।२४ ) इत्यत्रोक्त सर्वगतत्वमप्येवमेव । धर्मभूतज्ञानद्वारा जीवात्मनः सूक्ष्मानुप्रवेशक्षमत्वात् ।

'देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः ।
नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नः स्वतःसुखी' ( आ. सि. पृ. ६ )

इत्युक्तं व्यापित्वमपि तथैव । यत्तु विष्णुपुराणे 'तस्याऽऽत्मपरदेहेषु सतोऽपि' (वि०पु० २।१४।३१) इत्यत्र जीवात्मनोऽनेकदेहेषु सद्भावप्रतिपादनेन विभुत्वं सूच्यत इति । तन्न । जातिद्वारा तथा प्रतिपादनात् । एकस्य जीवात्मनोऽन्यस्मिन्देहेऽसत्त्वेऽपि तज्जातीयस्यान्यस्य सत्त्वात् । देशान्तरे भोग्यवस्तूत्पत्तिस्तु जीवात्मनोऽणुत्वेऽपि न विरुद्धा । जीवात्मकृतकर्मनिमित्तेश्वरप्रीतिकोपात्मकबुद्धेरवादृष्टशब्दार्थत्वात् । ईश्वरस्य च विभुत्वेन तद्बुद्धेः सर्वकार्यसामानाधिकरण्यमव्याहतमेव । एतच्च मूल एवानुपदं स्फुटी भविष्यति । नचाऽऽत्मनोऽणुत्वे पृथिव्याद्यणुवत्तस्य प्रत्यक्षत्वं न स्यादिति वाच्यम् । विभुत्वेऽपि तवाऽऽकाशादिविभ्वन्तरवदप्रत्यक्षत्वप्रसङ्गात् । 'यथानुभवं स्वीकार्यमेव' इति चेन्ममापि तुल्यम् । पृथिव्यादिपरमाणूनामप्रत्यक्षत्वस्यास्माभिरनङ्गीकाराच्च ।

एतेनैवेति । योगिना नानादेहाधिष्ठानमपि ज्ञानद्वारैवेत्याशयः । मुक्तानां चेति । एतच्च 'प्रदीपवदावेशस्तथाहि दर्शयति' । ( ब्र. सू० ४।४।१५ ) इति सूत्रे भाष्ये स्पष्टम् । एतेन "संसारदशायां स्वरूपज्ञानयोः संकोचादणुपरिमाणमात्मस्वरूपम् । मोक्षदशायां तु सर्वगतं सर्वव्यापि स्वरूपं ज्ञानं च विस्तीर्णतया प्रकाशते । एतच्च 'स चाऽऽनन्त्याय कल्पते' ( श्वे० ५।९ ) इति श्रुत्याऽवगम्यते । पराशरेणापि—

'विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथा परा' ( वि. पु. ६।७।६१ )

इत्यादिना संकोचविकासयोगित्वमुक्तम्" इति वरदविष्णुमिश्रोक्तमपास्तम् । धर्मभूतज्ञानद्वारा तदुपपत्तेरुक्तत्वात् ।

पूर्वानुभूतेति । 'न जायते म्रियते' ( का.२।१८ ) 'ज्ञाज्ञौ द्वावजावीशानीशौ' ( श्वे. १।९ ) इत्यादिश्रुतयोऽप्यत्र प्रमाणम् । किं च जीवानित्यत्वेऽकृताभ्यागमकृतविप्रणाशरूपदोषद्वयप्रसङ्गः । जीवस्येति । 'प्रजापतिः प्रजा असृजत' ( तै. सं.७।१।१ ) 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः' ( छा.६।८।४ ) 'यतो

---

१ घ. °ना यु° । २ घ. त् । जीवउत्पन्नो जीवो नष्ट इ° ।

स च प्रतिशरीरं भिन्नः। एकपरिमाणेष्वनेकेषु सुवर्णघटेष्वेको घट इति

वा इमानि भूतानि जायन्ते' (तै. ३।१।१) 'जीवान्विससर्ज भूम्याम्' (म.ना.१।४ इत्यादिश्रुतयोऽप्येतदभिप्रायेणैव योज्याः। ननु नित्यत्वे जीवात्मनां 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छां. ६।२।१) इति श्रुतिप्रतिपादितं सृष्टेः प्रागेकत्वावधारणं विरुध्यत इति चेन्न। नामरूपविभागाभाव एवैकत्वमिति तदाशयात्। एतेनाऽऽत्मानित्यत्ववादिनश्चत्वारोऽपि पक्षा निरस्ता वेदितव्याः। तथाहि—क्षणिक आत्मेति विज्ञानात्मवादिनः। आशरीरस्थायीति प्राणेन्द्रियात्मवादिनः। प्रलयान्त इति पौराणिकैकदेशिनः। मोक्षावधिक इत्यौपनिषदाभासाः। तत्र प्रथमे आत्मानमुत्तरकालानवस्थायिनं मन्यमानो न किंचिदुद्दिश्य प्रवर्तेत। प्रवृत्तिर्हि खलूत्तरकाले सुखं दुःखनिवृत्तिं वाऽभिसंधायैव। साऽत्र कथं घटेत। फलकाले स्वाभावात्स्वकाले फलाभावात्। द्वितीये तु पारलौकिकं फलमभिसंधाय यज्ञादौ प्रवृत्तिर्न स्यात्। सा च सार्वत्रिकी दृश्यते। तृतीये मोक्षमार्गोपदेशानर्थक्यम्। चतुर्थेऽप्यानर्थक्यमेव। तदुक्तम्—

'अहमर्थविनाशश्चेन्मोक्ष इत्यध्यवस्यति।
अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः' इति।

ननु 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति' (बृ.२।४।१२) इति जीवविनाशः श्रूयते। मैवम्। अस्याः श्रुतेर्लोकधीरूढानुवादमात्रत्वात्।

प्रतिशरीरमिति। सौभर्यादिक्षेत्रज्ञव्यतिरिक्तस्थल इति शेषः। भिन्न इति। अत एव कस्य चित्सुखित्वकालेऽन्यस्य दुःखित्वं दृश्यते। देहभेदस्तु न तन्नियामकः। सौभरिशरीरे तददर्शनात्। न च देहभेदस्यानियामकत्वे जन्मान्तरानुभूतस्य कुतो न स्मृतिरिति वाच्यम्। संस्कारनाशेन तदुपपत्तेः। न च चैत्रेणानुभूते मैत्रस्यास्मरणमात्मैक्येऽपि संस्कारनाशादेवेति वाच्यम्। तथा सति चैत्रस्याप्यस्मरणप्रसङ्गात्। किं च सुखदुःखयोरेकाश्रयत्व उभयप्रतिसंधानमेकस्यैव स्यात्। कश्चिद्बद्धः कश्चिन्मुक्तः कश्चिच्छिष्यः कश्चिदाचार्य इत्यादिव्यवस्था च न सिध्येत्। देवमनुष्यतिर्यगादिभेदेन विषमसृष्टिश्च नोपपद्येत। कर्मभेदेन तु न विषमा सृष्टिः। जीवैक्यपक्षे हि कस्य कर्म कस्माद्भिन्नमुच्यते। इदं कर्मामुकस्येति व्यवस्थाया असंभवात्। एवमेवान्तःकरणभेदस्याप्यनियामकत्वं द्रष्टव्यम्। प्रयोगश्च—चैत्रात्मा मैत्रतादात्म्यरहितः। तदनुभवजन्यस्मृत्यनाधारत्वात्कदाचिदपि तद्गतसुखादिप्रतिसंधानरहितत्वाद्वा। 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' (का०५।१३) इत्यादिश्रुतिरपि जीवानेकत्वे प्रमाणम्। नन्वियं श्रुतिरौपाधिकभेदाभिधायिनी। अत एव 'भोक्ता भोग्यम्'। (श्वे०१।१२) इत्यादिभिर्नैकत्वप्रतिपादिकाभिः श्रुतिभिरविरोध इति चेत्तत्राऽऽह—एकपरिमाणेष्विति।

प्रतीतिवद्व्रीहिराशावेको व्रीहिरितिवच्च ज्ञानैकाकारतयैकत्वव्यवहारः। न तु स्वरूपैक्यम्। प्रमाणविरोधात्।

स्वतः सुखी। उपाधिवशात्संसारः। अयं च कर्ता भोक्ता शरीरी शरीरं च भवति। प्रकृत्यपेक्षया शरीरी। ईश्वरापेक्षया शरीरम्। तस्य प्रत्यक्षश्रुतिभ्यां

---

एको व्रीहिरिति। एको व्रीहिः सुनिष्पन्नः सुपुष्टं कुरुते जनमित्यादौ यथा। रामसुग्रीवयोरैक्यमित्यत्राप्येवमेव। तयोः प्रकारस्यैक्यात्। ज्ञानैकाकारतयेति। इयदेवहि जीवाद्वैतम्। जीवाद्वैतशब्दस्य प्रकाराद्वैते तात्पर्यात्। जीवानामनेकत्वेऽपि तेषां प्रकारस्यैक्यात्। 'नानात्मानो व्यवस्थातः' इतिन्यायसूत्रेऽपि जीवानेकत्वमेव स्थापितम्। सांख्यैरप्युक्तम्—

'जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव' (सां० का० १८) इति।

तथा च जीवभेदनिषेधवचनानि प्रामाणिकस्वरूपभेदव्यतिरिक्तदेहात्माभिमाननिबन्धनदेवत्वादिभेदनिषेधपराणीत्युक्तं न्यायसिद्धाञ्जने। एवं जीवानां परस्परं भेदे सिद्धे जीवब्रह्मभेदोऽपि सिध्यति। 'नेह नाना' (बृ० ४।४।१९) इत्यादिश्रुतयस्तु सर्वस्य ब्रह्मशरीरत्वेन ब्रह्मशरीरव्यतिरिक्तवस्त्वन्तरनिषेधार्थिकाः। एतदेव हि ब्रह्माद्वैतम्। तस्य प्रकार्यद्वैते तात्पर्यात्। ब्रह्मशरीरभूतानां प्रकाराणां जीवानामनेकत्वेऽपि तेषां सर्वेषामात्मभूतस्यप्रकारिणो ब्रह्मण ऐक्यात्। मुक्तावपि न जीवब्रह्मणोरैक्यम्। 'सदा पश्यन्ति सूरयः' (नृ० पू० ५।१०) इत्युक्तेः। किंतु साम्यमात्रम्। 'मम साधर्म्यमागताः' (गी० १४। २) इति भगवतैवोक्तत्वात्।

स्वतः सुखीति। तदुक्तमात्मसिद्धौ—

'नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नः स्वतः सुखी' इति।

उपाधिवशादिति। अनादिकर्मरूपाविद्याकृताचित्संसर्गादित्यर्थः। उपाधिर्लिङ्गदेहः प्रकृत्यात्मकोऽनादिरिति मान्याः। कर्तेति। तथा च श्रुतिः—'कर्ता विज्ञानात्मा पुरुषः' (प्र. ४।९) इति। अत एव 'यजेत स्वर्गकामः' 'ब्रह्मेत्युपासीत' (छां. ३।१८।१) इत्यादिशास्त्राणामर्थवत्त्वम्। बोद्धुरेव हि शासनं नाचेतनस्य प्रधानादेः। इदं च 'कर्ता शास्त्रार्थवत्त्वात्' (ब्र. सू. २।३।३३) इत्यधिकरणे स्पष्टम्। यत्तु—

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।
अहंकारविमूढात्मा कर्ताऽहमिति मन्यते ॥

(गी. ३।२७) इति गुणानामेव कर्तृत्वं स्मर्यत इति। तत्सांसारिकप्रवृत्तिष्वस्य कर्तृता सत्त्वरजस्तमोगुणसंसर्गकृता न स्वरूपप्रयुक्तेत्याशयेन। एवमात्मनः कर्तृत्वे सिद्धे तन्मूलकं भोक्तृत्वमपि तस्यैवेत्याह—भोक्तेति। प्रकृत्यपेक्षयेति। प्रकृतिविकारभूतपाञ्चभौतिकशरीरापेक्षयेत्यर्थः। ईश्वरेति। 'यस्याऽऽत्मा शरीरम्' (बृ. ३।७।३)

स्वयंप्रकाशत्वं च सिद्धम् । प्रयोगश्च—आत्मा स्वयंप्रकाशः, ज्ञानत्वाद्धर्मभूतज्ञानवदिति । ज्ञानाणुत्वामलत्वादय एतस्य स्वरूपनिरूपकधर्माः ।

एतेन ज्ञानस्य क्षणिकत्वं क्षणिकसंतानरूप आत्मेति बौद्धपक्षः, भूतचतुष्टयात्मकत्वाद्देहस्य देहावधिक आत्मेति चार्वाकपक्षः, गजदेहे गजपरिमाणः

---

इतिश्रुतेः । सिद्धमिति । स्वस्य चास्य स्वयंप्रकाशत्वम् । परस्य तु तज्ज्ञानविषयतयैव प्रकाशते । स्वस्यापि प्रमाणान्तरावसेयाणुत्वशेषत्वनियाम्यत्वनित्यत्वादिविशिष्टरूपेण ज्ञानविषयत्वमस्त्येव । अहमिति प्रत्यक्त्वैकत्वविशिष्टतया तु स्वप्रकाशता सर्वदा । योगदशायां तु यथावस्थितापूर्वाकारविशिष्टतया यौगिकप्रत्यक्षेण साक्षात्क्रियते । तदुक्तमात्मसिद्धौ—

'योगाभ्यासभुवा स्पष्टं प्रत्यक्षेण प्रकाश्यते' इति ।

'अत्रायं पुरुषः स्वयंज्योतिर्भवति' (बृ. ४।३।९) 'कतम आत्मा योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' (बृ० ४।३।७) इत्यादिश्रुतिभिश्चाऽऽत्मनः स्वयंप्रकाशत्वं सिध्यति । यद्यपि 'हृद्यन्तर्ज्योतिः पुरुषः' इत्यत्र ज्योतिःशब्दो भाक्तस्तथाऽपि स्वप्रकाशप्रदीपादिवल्लोकदृष्ट्याऽन्यनिरपेक्षत्वं स्वरसावगतं न बाध्यम् । स्वयंप्रकाशत्वमनन्याधीनप्रकाशत्वम् । इदमेवाजडत्वम् ।

ज्ञानस्येति । इत्थं हि बौद्धमतम्—संविदः स्वयंप्रकाशत्वात्तस्या एवाऽऽत्मत्वम् । किं च यः संविदोऽन्यं संवेदितारमभ्युपगच्छति, अभ्युपगच्छत्येवासौ संविदम् । नह्यसत्यामेव संविदि संवेत्तीत्युपपद्यते । एवं चेदुभयवादिसंप्रतिपन्नतया सैव परं वेदित्री लाघवाद्भवतु किमन्येन कल्पितेन । तस्मादनाद्यविद्यावशात्समारोपितावास्तवग्राह्यग्राहकविकल्पोल्लेखिनी स्वयंप्रकाशा संविदेव परमार्थसती सैव चाऽऽत्मेति । परं त्वेतदयुक्तम् । स्वयंप्रकाशत्वं हि नाऽऽत्मत्वस्य व्याप्यम् । किं तु व्यापकम् । लाघवमप्यप्रयोजकम् । 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' (बृ० ४।३।३०) इति श्रुतौ संवित्तद्वतोः पृथग्दर्शनात् । तदुक्तं तत्त्वमुक्ताकलापे—

'नित्या सा यस्य तद्वानपि निगममितो गौरवं नास्य भारः' (त. क. २।४) इति ।

किंच संविद् आत्मत्वे पूर्वेद्युर्दृष्टमपरेद्युरहमिदमदर्शमिति कथमिव प्रत्यभिजानीयात् । न च संवित्संतानाश्रयणेन प्रत्यभिज्ञोपपद्यत इति वाच्यम् । संविद्व्यतिरिक्तस्य स्थायिनोऽनुसंधायिनः संतानस्याभ्युपगमे स्वसिद्धान्तत्यागः । अनभ्युपगमे प्रत्यभिज्ञानुपपत्तिस्तदवस्था । न ह्यन्येनानुभूतेऽन्यस्य प्रतिसंधानसंभवः ।

भूतेति । प्रागुपपादितम् । गजदेह इति । एतदपि मतमयुक्तम् । बृहतः शरीराद्दल्पीयसि शरीरे प्रविशतोऽपरिपूर्णत्वप्रसङ्गात् । विकारत्वप्रयुक्तानित्यत्वादिदोषप्रस-

---

१ क. °ज्ञानत्वाणु° । २ क. °कत्वात्क्षणि° ।

पिपीलिकादेहे तत्परिमाणोऽतो देहपरिमाण आत्मेति जैनपक्षः, कर्तृत्वभोक्तृत्वादिकं प्रकृतेरेव न तु पुरुषस्येति सांख्यपक्षः, ब्रह्मांशो जीव इति यादवपक्षः, सोपाधिकब्रह्मखण्डो जीव इति भास्करपक्षः, अविद्यापरिकल्पित एकजीव-

श्चेश्च । किंचैककालेऽनेकदेहान्परिगृह्णतां सौभरिप्रभृतीनां स्वस्वरूपमनेकधा कृत्वा तत्तद्देहपरिग्रहप्रसङ्गः । किंच परकायप्रवेशद्वाराऽनेकशरीराणि परिगृह्णतां योगिनां स्वरूपस्य स्थूलशरीरं त्यक्त्वा ततः सूक्ष्मशरीरपरिग्रहसमये तस्य सर्वस्यावकाशाभावाच्छैथिल्यं स्यात् । एतच्च 'नैकस्मिन्नसंभवात्' (ब्र० सू० २।२।३२) इत्यधिकरणे स्पष्टम् । कर्तृत्वेति । एतच्चानुपदमेवोपपादितम् (पृ० ७२ पं २३) । ब्रह्मांश इति । यादवमते भास्करमते च ब्रह्मणः सगुणत्वाङ्गीकारस्तुल्य एव । तथैव प्रपञ्चस्य सत्यत्वमपि । अत एव बन्धमोक्षव्यवस्था सिध्यति । इयांस्तु विशेषः । भास्करमते तत्त्वमसीति श्रुतेर्जीवब्रह्मणोरभेदः स्वाभाविकः । भेदस्त्वौपाधिको देवमनुष्यादिकृतः । अचिद्ब्रह्मणोस्तु भेदः स्वाभाविकः । 'निर्मलम्' (ब० बि० २१) इत्यादिश्रुतेः । अभेदोऽपि च तयोः स्वाभाविक एव । 'इदं सर्वं यदयमात्मा' (बृ० २।४।६) इत्यादिश्रुतेः । न चाचिद्ब्रह्मणोर्भेद औपाधिक इति वाच्यम् । उपाधेरचित्स्वन्तर्भावात् 'उपाधि ब्रह्म' एतदुभयभेदस्याप्यौपाधिकत्वेनौपाध्यन्तरापेक्षायामनवस्थाप्रसङ्गात् । यादवमते तु अचिद्ब्रह्मणोरिव जीवब्रह्मणोरपि भेदाभेदौ स्वाभाविकौ । मुक्तावपि भेदश्रुतेस्तत्त्वमसीत्यैक्योपदेशाच्चेति । परं त्वेतन्न युक्तम् । तत्र भास्करमते उपाधिब्रह्मव्यतिरिक्तवस्त्वन्तरानभ्युपगमाद्ब्रह्मण्येवोपाधिसंसर्गादौपाधिकाः सर्वे दोषा ब्रह्मण्येव स्युः । ततश्च 'अपहतपाप्मा' (छां० ८।७।१) इत्यादिश्रुतिविरोधः । यादवमतेऽपि जीवब्रह्मणोर्भेदवदभेदस्याप्यभ्युपगमाद्ब्रह्म स्वरूपेणैव सुरनरतिर्यक्स्थावरादिभेदेनावस्थितमिति ब्रह्मणो जीवभावेन सर्वे जीवगता दोषा ब्रह्मण एव स्युः । विस्तरस्तु वेदार्थसंग्रहादवसेयः । अविद्येति । अयं शांकरपक्षः । तत्र हि अविद्याशबलं ब्रह्मैव जीवः । स च सर्वशरीरेष्वेकः । चैत्रानुभूते मैत्रस्याननुसंधानं त्वविद्यावैचित्र्यात् । अत एव जीवैक्यवाद उपपद्यते । तथा 'ज्ञानिनो मित्रामित्रकथा कुतः' 'यद्यन्योऽस्ति परः कोऽपि' (वि० पु० २।१३।८९) 'एक एव हि भूतात्मा' (ब्र० बिं० १२) 'घटध्वंसे घटाकाशो न भिन्नो नभसा यथा' इत्यादि संगच्छत इति । एतदपि न सम्यक् । 'पृथगात्मानम्' इत्यादिश्रुतिषु जीवब्रह्मणोर्निरुपाधिकभेदप्रतिपादनात् । आश्रयानुपपत्त्यादिसप्तविधानुपपत्तिग्रस्तत्वेनाविद्याया निरूपयितुमशक्यत्वाच्च । सप्तविधानुपपत्तयस्तु श्रीभाष्यादौ द्रष्टव्याः । जीवैक्यवादस्तु साजात्यादेव । 'पण्डिताः समदर्शिनः' (गी० ५।१८) इत्यादिस्मृतिभिर्जीवानां साम्यबोधनात् । 'मित्रामित्रकथा कुतः' इति तु न

वादपक्षः, अन्तःकरणावच्छिन्नानेकजीववादपक्ष इत्येवमादयो विरुद्धपक्षा निरस्ताः। विभुत्ववादपक्षोऽपि।

ननु जीवस्य विभुत्वानङ्गीकारेऽदृष्टजनितदेशान्तरफलोपलब्धिः कथमिति चेन्न। जीवस्य संबन्धाभावेऽप्यदृष्टवशादेवोपपत्तेः। अदृष्टं नाम भगवत्प्रीत्यप्रीतिजनकजीवकर्तृककर्मविशेषजन्यो ज्ञानविशेषः। स विशेषो भगवत्संकल्प एव विभुस्वरूपं भगवन्तमाश्रितः। अतः फलोपलब्धिरिति न विरोधः।

स जीवस्त्रिविधः—बद्धमुक्तनित्यभेदात्। तत्र बद्धा नामानिवृत्तसंसाराः। ते चतुर्दशभुवनात्मकाण्डकटाहवर्तिनो ब्रह्मादिकीटपर्यन्ताश्चेतनविशेषाः। श्रीमन्नारायणनाभिकमलादुत्पन्नो ब्रह्मा। ब्रह्मणो रुद्रः। पुनर्ब्रह्मणः सनकादयो योगिनो नारदादिदेवर्षयो वसिष्ठभृग्वादिब्रह्मर्षयः पुलस्त्यमरीचिदक्षकश्यपादयो नव प्रजापतयो बभूवुः। तेभ्यो देवा दिक्पालाश्चतुर्दशेन्द्राश्चतुर्दश मनवोऽसुराः पितरः सिद्धगन्धर्वकिंनरकिंपुरुषविद्याधरादयो वसवो रुद्रा आदित्या अश्विनौ च दानवयक्षराक्षसपिशाचगुह्यकादयः। एवं देवयोनयः। मनुष्या अपि ब्राह्मणक्षत्रियवैश्यशूद्रादिजातिभेदाद्बहुविधाः। तिर्यञ्चोऽपि पशुमृगपक्षिसरीसृपपतङ्गकीटादिभेदाद्बहुविधाः। स्थावरा अपि वृक्षगुल्मलतावीरुत्तृणादिभे-

---

जीवैक्याभिप्रायम्। किंतु रागद्वेषाभावाभिप्रायम्। यद्यन्योऽस्ति। वि० पु० २। १३। ८९। इत्यत्रान्यशब्दोऽन्यादृश इत्यर्थकः। 'एक एव हि भूतात्मा'। ब्र० बिं० १२। इत्यैक्यमपि भूतसंसर्गशङ्कितवृद्धिह्रासनिषेधाभिप्रायम्। 'घटध्वंसे' इत्यादिकं त्वौपाधिकवैषम्यनिवृत्तावत्यन्तसाम्यं व्यनक्ति। न हि घटध्वंसे घटावच्छिन्न आकाशांशोऽशान्तरेणैकी भवति। अन्तःकरणेति। अयं पक्षः शांकरमतानुयायिनः। तदुक्तं वेदान्तपरिभाषायाम्—जीवो नामान्तःकरणावच्छिन्नं चैतन्यमिति। तस्य नानात्वमपि तत्रैव स्पष्टम्। अयमपि पक्षो न रमणीयः। कल्पान्तरेऽनुभूतस्य कल्पान्तरेऽनुसंधानानापत्तेः। अन्तःकरणावच्छिन्नचैतन्यस्य जीवत्वे जीवत्वस्यान्तःकरणचैतन्य—एतदुभयसमुदायवृत्तित्वेनान्तःकरणभेदे जीवभेदस्य दुर्वारत्वात्। अस्ति हि कल्पभेदे चेतोभेदः। सन्ति च कल्पादौ जातिस्मराः स्वयमागतविज्ञाना इति बोध्यम्।

नन्विति। एतच्चोपपादितं प्रागणुत्वसमर्थने (पृ० १९ पं० १२)

गुल्मेति। गुल्मा अनतिदीर्घनिबिडलता माळत्यादयः। लता दीर्घयायिन्यो द्राक्षातिमुक्ताप्रभृतयः। वीरुधश्छिन्ना अपि या विविधं प्ररोहन्ति ता गुडूचीप्रभृतयः।

---

१ क. ख. °पद्यते। अ°। २ ग. कादियोगि°। ३ घ. °क्षकाश्य°। ४ क. °वरा°।

दाद्बहुविधाः । वृक्षादीनां जलाहरणोपयुक्तकिंचिज्ज्ञानसंबन्धोऽस्त्येव । अमाणिमत्सु स्वल्पा सेत्युक्तत्वात् । अतो देवमनुष्यतिर्यक्स्थावरभेदभिन्ना बद्धाः । जरायुजाण्डजोद्भिज्जस्वेदजाश्च भवन्ति । देवमनुष्या जरायुजाः । तेषु ब्रह्मरुद्रादयः सनकादयश्च सीताद्रौपदीधृष्टद्युम्नादयो भूतवेतालादयश्चायोनिजाः । तिर्यगादयश्च जरायुजा अण्डजाः स्वेदजाश्च भवन्ति । स्थावरादय उद्भिज्जाः । एवंभूता बद्धा बीजाङ्कुरन्यायेन विषमप्रवाहतयाऽनादिकालप्रवृत्ताविद्याकर्मवासनारुचिप्रकृतिसंबन्धैश्चक्रवत्परिवर्तमानैर्गर्भजन्मबाल्ययौवनजाग्रत्स्वप्नसुषुप्तिमूर्छाजरामरणस्वर्गनरकगमनादिविविधविचित्रावस्थावन्तोनाद्यनन्तप्रकारातिदुःसहतापत्रयाभितप्ताः स्वतःप्राप्तभगवदनुभवविच्छेदवन्तश्चेति ।

ते द्विविधाः—शास्त्रवश्यास्तदवश्याश्चेति । तयोर्मध्ये करणायत्तज्ञानानां बद्धानां शास्त्रवश्यतोऽस्ति । तिर्यक्स्थावरादीनां तन्नास्ति । शास्त्रवश्या द्विविधाः—बुभुक्षवो मुमुक्षवश्चेति । तत्र बुभुक्षवस्त्रैवर्गिकपुरुषार्थनिष्ठाः पुरुषाः । ते द्विविधाः—अर्थकामपरा धर्मपराश्चेति । केवलार्थकामपरा देहात्माभिमानवन्तः । धर्मपराश्च 'अलौकिकश्रेयःसाधनं धर्मः' 'चोदनालक्षणोऽर्थो धर्मः' इतिलक्षणलक्षितयज्ञदानतपस्तीर्थयात्रादिनिष्ठाः । ते च देहातिरिक्तात्मनः परलोकोऽस्तीति ज्ञानवन्तः । धर्मपरा द्विविधाः—देवतान्तरपरा भगवत्पराश्चेति । देवतान्तरपरा ब्रह्मरुद्रेन्द्राग्न्याद्याराधनपराः । भगवत्पराश्चाऽऽर्तो जिज्ञासुरर्थार्थीत्युक्तरीत्याऽधिकारिणः । आर्तो भ्रष्टैश्वर्यकामः । अर्थार्थी त्वपूर्वैश्वर्यकामः ।

मुमुक्षवो द्विविधाः—कैवल्यपरा मोक्षपराश्चेति । कैवल्यं नाम ज्ञानयोगात्प्रकृतिवियुक्तस्वात्मानुभवरूपोऽनुभवः । अर्चिरादिमार्गेण परमपदं गत एव क्वचित्कोणे पतित्यक्तपत्नीन्यायेन भगवदनुभवव्यतिरिक्तस्वात्मानुभव इत्याहुः । केचिदर्चिरादिमार्गेण गतस्य पुनरावृत्त्यश्रवणात्प्रकृतिमण्डल एव क्वचिद्देशे स्वात्मानुभव इत्यप्याहुः । मोक्षपराश्च द्विविधाः—भक्ताः प्रपन्नाश्चेति । भक्ताः पुनरधीतसाङ्गसशिरस्कवेदाः पूर्वोत्तरमीमांसापरिचयाच्चिदचिद्विलक्षणमनवधिकातिशयानन्दस्वरूपं निखिलहेयप्रत्यनीकं समस्तकल्याणगुणात्मकं ब्रह्मावधार्य तत्प्राप्त्युपायभूतां साङ्गभक्तिं स्वीकृत्य तया मोक्षं प्राप्तुकामाः । भक्तावधिकारस्त्रैवर्णिकानामेव । देवादीनामप्यस्ति । अर्थित्वसामर्थ्ययोः

अथ वा वृक्षेभ्यो न्यूनपरिमाणा उद्भिज्जा गुल्माः कुरवकादयः । लता वल्लयः । बीजकाण्डप्ररोहिण्यो वीरुधः । स्वल्पासेति । अत्र सेत्यनेन संवित्परामृश्यते ।

१ क. °िषु स्वल्पाशेत्यु° । २ घ. °श्च द्रौ° । ३ घ. °द्धा जीवा बी° । ४ घ. °जागरस्वप्न° । ५ घ. °न्तश्च । ते° । ६ घ. °ता । ति° । ७ ग. °ते च द्वि° । ८ क. °लिधर्मल° । ९ घ. °रुद्रान्या° । १० घ. °त्युक्ताधि° । ११ ख. °नुरू° । १२ घ. °तितः त्यक्त° । १३ ख. °रिक्तास्वा° ।

संभवात् । न शूद्राधिकारः । अपशूद्राधिकरणविरोधात् । भक्तिस्वरूपं तु बुद्धिपरिच्छेदे प्रतिपादितम् । भक्ता द्विविधाः—साधनभक्तिनिष्ठाः साध्यभक्तिनिष्ठाश्चेति । व्यासादयः साधनभक्तिनिष्ठाः । श्रीपराङ्कुशादयः साध्यभक्तिनिष्ठाः ।

आकिंचन्यानन्यगतिकत्वधर्मविशिष्टो भगवन्तमाश्रितः प्रपन्नः । सोऽपि द्विविधः—त्रैवर्गिकपरो मोक्षपरश्चेति । त्रैवर्गिकपरो नाम भगवत एव धर्मार्थकामाभिलाषी । मोक्षपरस्तु सत्सङ्गान्नित्यानित्यविवेके सति संसारे निर्वेदाद्वैराग्य उत्पन्ने मोक्षेच्छायां जातायां तत्सिद्ध्यर्थमाचार्यो वेदसंपन्न इत्याद्याचार्यलक्षणलक्षितं गुरुं संश्रित्य तद्द्वारा पुरुषकारभूतां श्रियं प्रतिपद्य भक्त्याद्युपायान्तरेऽशक्तोऽत एवाकिंचनानन्यगतिः श्रीमन्नारायणचरणावेवोपायत्वेन यः स्वी करोति स प्रपन्नः । प्रपत्तिः सर्वाधिकारा ।

स च प्रपन्नो द्विविधः—एकान्ती परमैकान्ती चेति । यो मोक्षफलेन साकं फलान्तराण्यपि भगवत एवेच्छति स एकान्ती देवतान्तरशून्य इत्यर्थः । भक्तिज्ञानाभ्यामन्यत्फलं भगवतोऽपि यो नेच्छति स परमैकान्ती । स द्विविधः—दृप्त आर्तश्चेति भेदात् । अवश्यमनुभोक्तव्यमिति प्रारब्धकर्मानुभवन्नेतद्देहावसानसमयमीक्षमाणो दृप्तः । जाज्वल्यमानाग्निमध्यस्थितस्येव संसारावस्थितेरतिदुःसहत्वात्प्रपत्त्युत्तरक्षणमोक्षकाम आर्तः ।

मुक्तो नामोपायपरिग्रहानन्तरं नित्यनैमित्तिकभगवदाज्ञाकैंकर्यरूपाणि स्वयंप्रयोजनतया कुर्वन्भगवद्भागवतापराधांश्च वर्जयन्देहावसानकाले सुकृतदुष्कृते मित्रामित्रयोर्निक्षिपन्वाङ्मनसीत्यादिप्रकारेण हार्दे परमात्मनि विश्रम्य मुक्तिद्वारभूतसुषुम्नाख्यनाड्यां प्रविश्य ब्रह्मरन्ध्रान्निष्क्रम्य हार्देन साकं सूर्यकिरणद्वाराऽग्निलोकं गत्वा दिनपूर्वपक्षोत्तरायणसंवत्सराभिमानिदेवताभिर्वायुना च पथि सत्कृतः सूर्यमण्डलं भित्त्वा नभोरन्ध्रद्वारा सूर्यलोकं गत्वाऽनन्तरं चन्द्रविद्युद्वरुणेन्द्रप्रजापतिभिर्मार्गप्रदर्शिभिरातिवाहिकगणैः सोपचारैः सह तत्तल्लोकानतीत्य प्रकृतिवैकुण्ठसीमापरिच्छेदिकां विरजां तीर्त्वा सूक्ष्मशरीरं विहायामानवकरस्पर्शादप्राकृतदिव्यविग्रहयुक्तश्चतुर्भुजो ब्रह्मालंकारेणालंकृत इन्द्रप्रजापतिसंज्ञकनगरद्वारपालकाभ्यनुज्ञया श्रीवैकुण्ठाख्यं दिव्यनगरं प्रविश्य

सर्वाधिकारेति । अत्र शूद्रादीनामप्यधिकारः ।

१ क. °अकिंचनान° । २ क. घ. °रेणार° । ३ ग. घ. °ति । अ° । ४ घ. °इयमेव भो° । ५ घ. °प्रद्युम्नान° । ६ क. °नाड्या प्र° । ७ घ. °र्गद° । ८ ख. घ. °सीमप° । ९ घ. °तवि° । १० ख. तुर्भुजो ब्र° । ११ क. घ. °कानभ्यनुज्ञाप्य श्री° ।

गरुडानन्तयुक्तपताकालंकृतदीर्घप्राकारसहितगोपुरमतीत्यैरंमदाख्यामृतसरः—सोमसवनाख्याश्वत्थं च दृष्ट्वा शतं मालाहस्तेत्युक्तं पञ्चशतैर्दिव्याप्सरोगणैरुपचारितो ब्रह्मगन्धादिभिरलंकृतैस्तत्रस्थानन्तगरुडविष्वक्सेनादीन्प्रणम्य तैर्बहुमतो महामणिमण्डपमासाद्य पर्यङ्कसमीपे स्वाचार्यान्प्रणम्य पर्यङ्कसमीपं गत्वा धर्मादिपीठोपरिकमलेऽनन्ते विमलादिभिश्चामरहस्ताभिः सेव्यमानं श्रीभूलीलासमेतं शङ्खचक्रादिदिव्यायुधोपेतं जाज्वल्यमानकिरीटमकरकुण्डलग्रैवेयहारकेयूरकटकश्रीवत्सकौस्तुभमुक्तादामोदरबन्धनपीताम्बरकाञ्चीगुणनूपुराद्यपरिमितदिव्यभूषणभूषितमपरिमितोदारकल्याणगुणसागरं भगवन्तं दृष्ट्वा तत्पादारविन्दयुगुले शिरसा प्रणम्य पादेन पर्यङ्कमारुह्य तेन स्वाङ्के स्थापितः कोऽसीति पृष्टो ब्रह्मप्रकारोऽस्मीत्युक्त्वा तेन कटाक्षितस्तदनुभवजनितहर्षप्रकर्षात्सर्वदेशसर्वकालसर्वावस्थोचितसर्वविधकैङ्कर्यरतिराविर्भूतगुणाष्टक उत्तरावधिरहितब्रह्मानुभववान्यः स मुक्त इत्युच्यते। मुक्तस्य ब्रह्मसाम्यापत्तिश्रुतिस्तु भोगसाम्यमाह। जगद्व्यापारवर्जनस्य प्रतिपादनात्। तस्य नानात्वं सर्वलोकसंचरणं च संभवति। ननु[11] मुक्तस्यानावृत्तित्वप्रतिपादनादस्मिँल्लोके संचारः कथमिति न शङ्कनीयम्। कर्मकर्तृत्वस्यैव निषेधात्स्वेच्छया संचरणोपपत्तेः। अतो मुक्तो भगवत्संकल्पायत्तस्वेच्छया सर्वत्र संचरति।

नित्या नाम कदाचिदपि भगवदनभिमतविरुद्धाचरणाभावेन ज्ञानसंकोचप्रसङ्ग[13]रहिता अनन्तगरुडविष्वक्सेनादयः। तेषामधिकारविशेषा ईश्वरस्य

साम्यापत्तिश्रुतिरिति। 'निरञ्जनः परमं साम्यमुपैति' (मुं० ३। १।३) इति श्रुतिरित्यर्थः। 'मम साधर्म्यमागताः' (गी० १४। २) इत्यत्राप्येवमेव। मोक्षो हि सायुज्यमेव। न तु सालोक्यं सामीप्यं सारूप्यं वा। तेषां स्वर्गादिवत्फलान्तरत्वात्। सयुग्भावो हि सायुज्यं भोगसाम्यमिति यावत्। सयुक्शब्दश्च भिन्नयोरेकत्र साधारणयोगं दर्शयति। 'ब्रह्म वेद ब्रह्मैव भवति' (मुं० ३। २। ९) इतिश्रुतेरपि साम्य एव तात्पर्यम्। तदुक्तम्—

'लोकेषु विष्णोर्निवसन्ति केचित्समीपमृच्छन्ति च केचिदन्ये।
अन्ये तु रूपं सदृशं भजन्ते सायुज्यमन्ये स तु मोक्ष उक्तः' इति।

---

१ क. ख. °सरसः सो°। २ घ. °त्युक्तप°। ३ क. °शत दि°। ४ घ. °पचरि°। ५ घ. °तस्तत्रत्यानन्त°। ६ घ. °हस्तैः से। ७ घ. °रीट म°। ८ ख. °ह्मपरिकरो°। ९ घ. °काशोऽस्मीत्युक्त्वा ते°। १० क. °रणत्व च°। ११ क. °भैङ्गव°। १२ क. °दभि°। १३ ख. °ङ्गश्वार°।

रुपादानकारणं भवति। संकल्पविशिष्टवेषेण निमित्तकारणं भवति। कालाद्यन्त-

निमित्तकारणत्वं वदन्ति। तत्र बौद्धा वैशेषिकाश्च पार्थिवाप्यतैजसवायवीयांश्चतु-र्विधान्परमाणूनभ्युपगच्छन्ति, आर्हताः पुनरेकरूपानेवेत्यन्यत्। तत्कथमत्रेश्वरस्यैव कारणत्वमुच्यत इति चेन्न। परमाणौ प्रमाणाभावात्। तथाहि—न तावत्प्रत्यक्षम्। महत्त्वाभावात्। नाप्यनुमानम्। सदेवेत्याद्युक्तश्रुतिविरोधात्। न चाऽऽगमः। अनुप-लम्भात्। प्रत्युताऽऽगमादीश्वरस्यैव जगत्कारणत्वं सिध्यति। अन्येषां च प्रमाणानां त्रिष्वेवान्तर्भावः। यत्तु 'सांख्याः प्रधानमेव जगत्कारणम्। यथा मेघविमुक्तस्यैकरसस्य जलस्य नारिकेलतालचूतकपित्थादिविचित्ररसरूपेण परिणामप्रवृत्तिर्दृश्यते तथा परि-णामस्वभावस्य प्रधानस्यानन्याधिष्ठितस्यैव गुणवैषम्यनिमित्तो विचित्रपरिणामः संभ-वति' इत्याहुः। तन्न। प्रधानस्याचेतनत्वात्। चेतनमेव हि 'एवं विचित्रजगदाकारेण परिणामः' इति संकल्पहेतुः। यदि स्वभावत एव प्रवृत्तिस्तर्हि प्रलयानुपपत्तिः। जीवविशेषोऽपि न कारणम्। तस्य कर्मपरतन्त्रत्वात्। ब्रह्मरुद्रादयोऽपि सृज्यत्वसं-हार्यत्वरूपकर्मवश्यत्वश्रवणाज्जीवविशेषा एव। उपादानकारणमिति। कारणं त्रिविधम्—उपादानं निमित्तं सहकारि च। तत्र कार्यरूपेण परिणामयोग्यं वस्तू-पादानकारणम्। यथा घटं प्रति मृत्तिका। उपादानवस्तुनः कार्यरूपेण परिणामं यः करोति स कर्तैव निमित्तकारणमुच्यते। यथा कुलालः। कार्योत्पत्त्युपकरणं वस्तु सहकारिकारणम्। यथा दण्डचक्रादयः। जगतस्तु त्रिविधमपि कारणमीश्वर एव। सूक्ष्मचिदचिद्विशिष्ट उपादानम्। बहु स्यामिति संकल्पविशिष्टो निमित्तम्। ज्ञान-शक्त्यादिविशिष्टः सहकारीत्याशयः। नन्वीश्वरस्यैवोपादानत्वे तस्य सविकारत्वात् 'अविकाराय शुद्धाय' (वि॰पु॰१।२।१) इत्युक्तं निर्विकारत्वं विरुध्यत इति चेन्न। चिदचिद्रूपविशेषणविशिष्टस्येश्वरस्य जगद्रूपेण परिणामेऽपि विशेष्यस्य स्वरू-पस्य विकाराभावात्। परिणामस्तु विशेषणद्वारैव। यथोर्णनाभिः स्वरूपविकाराभावेऽपि स्वशरीरभूतविशेषणद्वारा तन्तुजालरूपकार्यं प्रत्युपादानं तद्वत्। विशिष्टस्वरूपेण विकाराश्रयत्वमीश्वरस्येष्टमेव। मनुष्यादिशरीरविशिष्टे स्वरूपतो निर्विकारे पुंसि बाल्ययुवत्वस्थविरत्वस्थूलत्वादिवत्। निमित्तकारणमिति। एकस्यैवोपादानत्वं निमित्तत्वं च न विरोधावहम्। यथैक एव जीवात्मा तैस्तैरुपायैः स्वसुखादीनुत्पा-दयति स्वयमेव च तेषां समवायिकारणं भवति तद्वत्। कालादीति। तदुक्तं तत्त्व-त्रयभाष्ये—'सृष्टौ प्रसक्तायां चतुर्दशभुवनस्रष्टुः समष्टिपुरुषस्य ब्रह्मणः, तेन सृष्टानां नित्यसृष्टिकर्तॄणां दशानां प्रजापतीनां सृष्ट्यपेक्षितस्य कालस्य परस्परमु-त्पादकानां सर्वजन्तूनां च तत्तत्प्रवृत्तयः सर्वाः स्वस्मिन्यथा पर्यवस्यन्ति तथाऽन्त-रात्मा सन्प्रवृत्तिहेतुरजोगुणविशिष्टः सन्सृजति' इति।

धर्मिविशेषेण सहकारिकारणं च। कार्यरूपेण विकारयोग्यं वस्तु, उपादानम्। कार्यतया परिणामयितृ, निमित्तम्। कार्योत्पत्त्युपकरणं वस्तु, सहकारि। यद्वोत्तरोत्तरावस्थाविशिष्टस्वरूपापेक्षया तदनुगुणानियतपूर्वभाव्यवस्थाविशिष्टमुपादानम्। यथा घटत्वावस्थाविशिष्टमृद्द्रव्यापेक्षया पिण्डत्वावस्थाविशिष्टं तदेव द्रव्यम्। परिणामोन्मुख्यातिरिक्तेनाऽऽकारेणापेक्षितं कारणं निमित्तम्। अस्मिन्पक्षे सहकारिकारणस्य निमित्तेऽन्तर्भावः। एवं त्रिविधकारणपक्षे कारणद्वयपक्षे च कारणलक्षणलक्षितत्वादखिलजगत्कारणत्वं भगवतो नारायणस्यैव संभवति।

ननु कथं नारायणे कारणत्वपर्यवसानमिति चेदुच्यते—न्यायसंहितवेदान्तवाक्यविचारेणैवं पर्यवस्यति। तद्यथा—आदौ तावत्प्रकृतेर्जगत्कारणत्वं नोपपद्यते। ईक्षितृत्वाद्यभावात्। छान्दोग्ये तावत्सदाकाशप्राणशब्दवाच्यानां जगत्कारणत्वं प्रतीयते। वाजसनेयके ब्रह्मशब्दवाच्यस्य कारणत्वं प्रतीयते। सर्वशाखाप्रत्ययन्यायेन कारणवाक्यानामेकविषयत्वे प्रतिपादयितव्ये छागपशुन्यायेन सामान्यवाचकानां सदादिशब्दानां विशेषे ब्रह्मणि पर्यवसानं वक्तव्यम्। एवमुक्तन्यायेन ब्रह्मशब्दवाच्यस्य तैत्तिरीयोक्त आत्मशब्दवाच्ये पर्यवसाने आत्मशब्दवाच्यः क इत्याकाङ्क्षायां श्रुतिप्रसिद्ध इन्द्रो वा तथा प्रसिद्धोऽग्निर्वोपास्यत्वेन प्रसिद्धः सूर्यो वा कारणत्वेनोक्तः सोमो वाऽभीष्टफलप्रदत्वेनोक्तः कुबेरो वा यमो वा वरुणो वेति विशय एतेषां कर्मवश्यत्वपरिच्छिन्नैश्वर्यत्वसंहार्यत्वश्रवणान्नैते जगत्कारणभूताः किं तु श्वेताश्वतरे शिवस्य कारणत्वं भासत इति भाति। एवमथर्वणशाखायां शंभुशब्दवाच्यस्य ध्येयत्वं कारणत्वं भासते। तथैवाथर्वशिरसि रुद्रशब्दवाच्यस्य सर्वात्मकतोच्यते। तैत्तिरीये हिरण्यगर्भस्य जगत्कारणत्वं प्रतीयते। अत्रापि सामान्यविशेषन्यायाच्छिवशंभुरुद्रादिशब्दानां हिरण्यगर्भशब्दवाच्यविशेषे पर्यवसानं युज्यते। शिवशब्दस्य शिवमस्तु सर्वजगतां, शिवं कर्मास्तु, पन्थानः सन्तु ते शिवा इत्यादिभिर्मङ्गलवाचकत्वम्। रुद्रशब्दस्याग्निवाचकत्वम्। एवं महेश्वरशंभ्वादिसामान्यशब्दा अव्ययवयवशक्त्या चतुर्मुखे पर्यवस्यन्ति। कारणवाचिशिवादिशब्दानां मुख्यवृत्त्या रुद्रपरत्वं वा किं न स्यादिति न शङ्कनीयम्।

सर्वशाखेति। सर्वशाखासु प्रत्ययो ज्ञानमेकरूपमिति न्यायशरीरम्।

१ ख. °मयत्तनिमि°। २ क. घ °शिष्ट तदपा°। ३ घ. °रिणो नि°। ४ घ °सहकृत°। ५ घ. °चार ए°। ६ क. °ते। सकलपक्षानाद्यभावा°। ७ ग. घ. °ईक्षाद्य°। ८ घ °शप्राणवश°। ९ क. °त्वेन प्र°। १० घ. °ब्दस्य°। ११ घ °सानम्। आ°। १२ क °वाऽग्नि°। १३ घ. °र्यत्व°। १४ घ. °वेता°। १५ घ. °आ शिवशब्द°। १६ घ. °गर्भ वाच्य°।

रुद्रस्य चतुर्मुखाँदुत्पत्तिश्रवणादेपहतपाप्मत्वश्रवणाच्च, न रुद्रस्य कारणत्वम्। अतो हिरण्यगर्भप्रजापतिस्वयंभ्वादिशब्दवाच्ये चतुर्मुखे शिवादिशब्दाः पर्यवस्यन्ति। एवमपि महोपनिषन्नारायणोपनिषत्सु बालोपनिषन्मैत्रोंयणीयपुरुषसूक्तनारायणानुवाकान्तर्यामिब्राह्मणादिषु नारायणस्यैव परमकारणत्वसर्वशब्दवाच्यत्वमोक्षप्रदत्वजगच्छरीरत्वादेः प्रतिपादनात्स्वयंभूहिरण्यगर्भप्रजापतिशब्दानां नारायणे पर्यवसानं युक्तमिति नारायण एवाखिलजगत्कारणं सर्वविद्यावेद्यश्च।

नँन्वन्तरादित्यविद्या रुद्रपरेति शङ्कां न कर्तव्या। तस्या विष्णुपरत्वस्यैव बहुँषु प्रमाणेषु सिद्धत्वात्। भर्गशब्दस्य सकारान्तत्वप्रतिपादनाच्च। तर्हि दहरविद्यायामाकाशशब्दवाच्यनारायणान्तर्यामितया रुद्रस्य प्रतिपादनाद्दहरविद्या रुद्रपरेति न शङ्कनीयम्। नारायणान्तर्वर्तिगुणजातस्यैवोपास्यत्वेन तत्राभिधानात्। एवं सर्वविद्यास्वप्यूह्यम्। अतः समस्तकल्याणगुणात्मकः प्रकृतिपुरुषाभ्यां भिन्नस्ताभ्यां विशिष्टः परब्रह्म जगत्कारणं नारायण एव। नन्वद्वैतश्रुत्या ब्रह्मैक्यमेव सत्यं निर्गुणं च। तदन्यज्ज्ञातृज्ञेयादिकं तस्मिन्नेव परिकल्पितं सर्वं मिथ्या। ब्रह्माविद्यया संसरति। तत्त्वमसीत्यभेदज्ञानं तन्निवर्तकम्। तस्मान्निर्विशेषचिन्मात्रे ब्रह्मणि वेदान्तानां तात्पर्यमिति मतान्तरस्थैः प्रतिपादनात्कथं नारायणे तात्पर्यं तस्य समस्तकल्याणगुणाकरत्वादिकथनं चेति चेदुच्यते—कारणत्वप्रतिपादकश्रुतिभिर्नारायणस्य कारणत्वे सिद्धे भेदाभेदश्रुत्योर्घटकश्रुत्या विषयभेदेनाविरोधे प्रतिपादिते निर्गुणप्रतिपादकश्रुतीनां हेयगुणनिषेधकत्वाज्ज्ञातृज्ञेयादिकल्पकाविद्याया एवाप्रामाण्याद्ब्रह्मकार्यस्य सत्यत्वादविद्यया संसारे जीवगतदोषाणां ब्रह्मण्यपि संभवात्तन्निवर्तकान्तरस्य वक्तुमशक्यत्वात्। अतोऽद्वैतवादस्यासंभवान्न निर्विशेषचिन्मात्रब्रह्मसिद्धिः। अतो नारायणस्यैव जगत्कारणत्वमोक्षप्रदत्वादिगुणयोगः संभवतीति सविशेषमेव ब्रह्म। सूक्ष्मचिदचिद्विशिष्टं ब्रह्म कारणं स्थूलचिदचिद्विशिष्टं ब्रह्म कार्यमिति कारणादनन्यत्कार्यमिति विशिष्टाद्वैतवेदान्तिनां संप्रदायः।

---

नन्वद्वैतश्रुत्येति। मायावादिना मतमेतत्।

---

१ क °खादेवोत्प°। २ घ. °दनप°। ३ ख °र्भ स्वयभूप्रजापत्यादि°। ४ घ. ग. °ायणी°। ५ ख. °नरवन्त°। ६ ख. °ङ्कानुक°। ७ घ °हुप्रमाणे सि°। ८ ख °त्। गर्भेश°। ९ घ. °त्मकं प्र°। १० घ. °भिन्न ताभ्यां विशिष्ट परं ब्रह्म जगत्कारणम्। न°। ११ घ. °ब्रह्मात्मैक्य°। १२ घ. °न्वय°। १३ घ °णप्रतिपे°। १४ घ. °माणिकत्वात्। १५ ख. °विद्याया स°।

एवमीश्वराङ्गीकारान्निरीश्वरसांख्यमीमांसकादिमतनिरासः । तस्यैवोपादानत्वस्वीकाराद्योगपाशुपतनैयायिकानां मतनिरासः । तैर्निमित्तमात्रेश्वराङ्गीकारात् । ईश्वरस्य कार्यं प्रत्युपादानत्वनिमित्तत्वेत्वकर्तृत्वप्रेरकत्वनियन्तृत्वप्रशास्तृत्वसहकारित्वोदासीनत्वादिकमप्युपपद्यते । बाल्ययौवनावस्थादयो दोषा यथा शरीरगता न तु शरीरिणि जीव एवं चिदचिच्छरीरिणः परमात्मनोऽपीति न निर्विकारश्रुतिविरोधः । नियमेनाऽऽधेयत्वविधेयत्वशेषत्वादेः शरीरलक्षणस्य जगति विद्यमानत्वाज्जगच्छरीर ईश्वरस्तद्गतदोषैरसंस्पृष्टश्च ।

स चेश्वरो विभुस्वरूपः । विभुत्वं नाम व्यापकत्वम् । तच्चेश्वरस्य त्रिधा स्वरूपतो धर्मभूतज्ञानतो विग्रहतश्च । स चानन्त इत्युच्यते । अनन्तो नाम त्रिविधपरिच्छेदरहितः । त्रिविधपरिच्छेदस्तु देशतः कालतो वस्तुतः परिच्छेदः । सत्यत्वज्ञानत्वानन्दत्वामलत्वादय ईश्वरस्य स्वरूपनिरूपकधर्माः । ज्ञानशक्त्यादयो निरूपितस्वरूपधर्माः । सर्वज्ञत्वसर्वशक्तित्वादयः सृष्ट्युपयुक्ता धर्माः । वात्सल्यसौशील्यसौलभ्यादय आश्रयणोपयुक्ता धर्माः । कारुण्यादयो रक्षणोपयुक्ता धर्माः । एतेषां स्वरूपं बुद्धिपरिच्छेदे निरूपितमितीह न प्रपञ्च्यते । अयमीश्वरोऽण्डसृष्ट्यनन्तरं चतुर्मुखदक्षकालादिष्वन्तर्यामितया स्थित्वा सृष्टिं करोति । विष्ण्ववताररूपेण मनुकालाद्यन्तर्यामिस्वरूपेण च स्थित्वा रक्षको भवति । रुद्रकालान्तकादीनामन्तर्यामितया संहारमपि करोति । अतः सृष्टिस्थितिसंहारकर्ता च भवति ।

एवंप्रकार ईश्वरः परव्यूहविभवान्तर्याम्यर्चावताररूपेण पञ्चप्रकारः । तत्र परो नाम त्रिपाद्विभूतौ कुमुदकुमुदाक्षपुण्डरीकवामनशङ्कुकर्णसर्वनेत्रसुमुखसुप्रतिष्ठितादिभिर्दिव्यायुधभूषणपरिजनपरिच्छदान्वितैर्दिव्यनगरपालकैः परि-

---

परव्यूहेति । तदुक्तं विष्वक्सेनसंहितायाम्—

‘ मम प्रकाराः पञ्चेति प्राहुर्वेदान्तपारगाः ।
परो व्यूहश्च विभवो नियन्ता सर्वदेहिनाम् ॥
अर्चावतारश्च तथा दयालुः पुरुषाकृतिः ।
इत्येवं पञ्चधा प्राहुर्मां रहस्यविदो जनाः । ’ इति ।

---

१ ख. °नत्वादिस्वी° । २ ख. °त्वकर्तृ° । ३ घ. प्रकाशितृत्व° ग. प्रकाशयितृत्व° । ४ ख. म... °कमुप° । ५ घ. °रीरीश्च° । ६ घ. °ज्ञानानन्द° । ७ घ. °पविशेषका ध° । ८ घ. °मिनः ... घ.. °दीनां चान्त° ।

रक्षिते[1] श्रीवैकुण्ठाख्ये पुरे चण्डप्रचण्डेप्रचण्डभद्रभद्रसुभद्रजयविजयधातृविधातृप्रभृतिभिर्द्वारपालैरुपेतश्रीमद्दिव्यालये[2] श्रीमहामणिमण्डपे धर्माद्यष्टपादविराचितसिंहासने शेषपर्यङ्के दिव्यमङ्गलविग्रहविशिष्टश्चतुर्भुजः श्रीभूनीलासहितः शङ्खचक्रादिदिव्यायुधोपेतः श्रीमत्किरीटादिदिव्यभूषणभूषितोऽनन्तगरुडविष्वक्सेनादिभिर्नित्यैः सामगानपरैरन्यैर्मुक्तैश्चानुभूयमानो ज्ञानशक्त्याद्यनन्तकल्याणगुणविशिष्टः परब्रह्मपरवासुदेवादिशब्दवाच्यो नारायणः।

व्यूहो नाम पर एवोपासनार्थं जगत्सृष्ट्याद्यर्थं च वासुदेवसंकर्षणप्रद्युम्नानिरुद्धभेदेन चतुर्धाऽवस्थितः। तत्र षड्गुणपूर्णः श्रीवासुदेवः। ज्ञानबलाभ्यां

---

श्रीवैकुण्ठाख्ये पुर इति। पुरं चैतन्निरवधिकानन्दयुक्तं कालकृतपरिणामशून्यं च।

'या वै न जातु परिणामपदास्पदं सा कालातिगा तव परा महती विभूतिः'

इत्युक्तत्वात्। श्रीभूनीलेति। तदुक्तम्—

'वैकुण्ठे तु परे लोके श्रिया सार्धं जगत्पतिः।
उभाभ्यां भूमिनीलाभ्यां सेवितः परमेश्वरः' इति।

'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' (चि०उ०१२) इति तु नीलाया अप्युपलक्षणम्। ह्रीर्भूमिः। तत्र लक्ष्मीः प्रधानमहिषी। श्रीभूनीलानामनन्तगरुडादीनां च देहः शुद्धसत्त्वमयः। नीलेत्यत्र लीलेत्यपि पाठः। अनन्तगरुडेति। 'यत्र पूर्वे साध्याः सन्ति देवाः' (चि०उ०११) 'यत्रर्षयः प्रथमजा ये पुराणाः' (तै०सं०१।७।७) इत्युक्तत्वान्नित्यासंकुचितज्ञानानामनन्तादीनामनुभवविषयीभूतोऽयम्। तदुक्तम्—

'वैकुण्ठे तु परे लोके नित्यत्वेन व्यवस्थिताः।
पश्यन्ति च सदा देवं नेत्रैर्ज्ञानेन चामराः' इति।

अयमेव मुक्तप्राप्यः।

'सूर्यकोटिप्रतीकाशाः पूर्णेन्दुयुतसंनिभाः।
यस्मिन्पदे विराजन्ते मुक्ताः संसारबन्धनैः॥'

इत्युक्तत्वात्। तदाह—मुक्तैश्चेति।

उपासनार्थमिति। तथा चोपासकानुग्रहः सृष्ट्यादयश्च व्यूहकृत्यमिति सिद्धम्। संसारिसंरक्षणमस्यैव कृत्यम्।

'उपासकानुग्रहार्थं जगतो रक्षणाय च'

इत्युक्तत्वात्। षड्गुणेति। ज्ञानबलैश्वर्यवीर्यशक्तितेजांसि षड्गुणाः। तत्र ज्ञानं नाम सर्वदा सर्वविषयप्रकाशकः स्वप्रकाशो गुणविशेषः। शक्तिर्जगत्प्रकृतिभावोऽघ-

---

१ घ. 'क्षितश्रीमद्वैकु°। २ घ. °ण्डसुभद्रज°। ग. °ण्डभद्रसुभद्रज°। ३ क. ग. 'पेते श्री°। ४ क. 'ये म'। ख. °ये श्रीमणि'। ५ ख. 'म नज्ञा'। ६ घ. °र्थं च'। ७ ख. °षडैश्वर्यगुणः श्री°। घ. 'षड्गुणपरिपू'।

संकर्षणः। ऐश्वर्यवीर्याभ्यां प्रद्युम्नः। शक्तितेजोभ्यामनिरुद्ध इति गुणविभागः। एतेषु चतुर्षु प्रत्येकं त्रयस्त्रयोऽवतीर्णाः केशवादयो व्यूहान्तराणि द्वादशमासानां द्वादशादित्यानां चाधिदैवतानि। ऊर्ध्वपुण्ड्रेषु तेषामेव स्थानं विधीयते। तत्र

---

टितघटनासामर्थ्यं वा। बलं जगत्कारणत्वप्रयुक्तश्रमाभावः समस्तवस्तुधारणसामर्थ्यं वा। ऐश्वर्यं कर्तृत्वलक्षणं स्वातन्त्र्यं समस्तवस्तुनियमनसामर्थ्यं वा। वीर्यं जगदुपादानत्वेऽपि स्वरूपविकाराभावः। तेजः सहकारिनैरपेक्ष्यं पराभिभवनसामर्थ्यं वेति ज्ञेयम्। संकर्षण इति। ज्ञानबलाभ्यां पूर्ण इत्यर्थः। संकर्षण ऐश्वर्यादिगुणचतुष्टयसद्भावेऽपि ज्ञानबलरूपं गुणद्वयमेव प्रकाशते। तस्याधिकृतकार्यानुगुणत्वात्। एवमग्रेऽपि। तदुक्तम्—

'निगूहनं चतुष्काणां द्वंद्वानां च प्रकाशनम्' इति।

एतेन मोहनशक्त्या मनुष्यादिसजातीयशङ्कास्पदेषु विभवेष्वपि हि सिद्धं षाड्गुण्यं किमुत व्यूहेष्विति सर्वेषां व्यूहानां षड्गुणाश्रयत्वेन गुणद्वयोक्तिरयुक्तेत्यपास्तम्। गुणद्वयोक्तेः प्रकाशितगुणाभिप्रायकत्वात्। संकर्षणादीनां कार्यं च तत्त्वत्रये प्रतिपादितम्—'तत्र संकर्षणो ज्ञानबलाभ्यां युक्तो जीवतत्त्वमधिष्ठाय तत्प्रकृतेर्विविच्य प्रद्युम्नावस्थां प्राप्य शास्त्रप्रवर्तनं जगत्संहारं च करोति। प्रद्युम्न ऐश्वर्यवीर्याभ्यां युक्तो मनस्तत्त्वमधिष्ठाय धर्मोपदेशं मनुचतुष्टयप्रभृतिशुद्धवर्गसृष्टिं च करोति। अनिरुद्धः शक्तितेजोभ्यां युक्तो रक्षणस्य तत्त्वज्ञानप्रदानस्य कालसृष्टेर्मिश्रसृष्टेश्च निर्वाहकः' इति। स्मृतावपि—

'बलेन हरतीदं स गुणेन निखिलं मुने।
ज्ञानेन तनुते शास्त्रं सर्वसिद्धान्तगोचरम्॥
ऐश्वर्येण गुणेनासौ सृजते तच्चराचरम्।
वीर्येण सर्वधर्माणि प्रवर्तयति सर्वशः॥
शक्त्या जगदिदं सर्वमनन्ताण्डं निरन्तरम्।
बिभर्ति पाति च हरिर्मणिसानुरिवाणुकम्॥
तेजसा निखिलं तत्त्वं ज्ञापयत्यात्मनो मुने' इति।

स संकर्षणः। असौ प्रद्युम्नः। हरिरनिरुद्धः। तथा च संकर्षणस्य कार्यं शास्त्रप्रवर्तनं संहारश्च। प्रद्युम्नस्य धर्मनयनं सृष्टिश्च। अनिरुद्धस्य तत्त्वगमनं रक्षणं चेति। अत्राऽऽद्यव्यूहस्य वासुदेवस्य षड्गुणतयाऽनुसंधेयत्वात्तस्य परस्मादभेदं विवक्षित्वा कचित्त्रिव्यूहो देव इत्युक्तमिति न तद्विरोध इति बोध्यम्। प्रत्येकमिति। केशवनारायणमाधवरूपं त्रयं वासुदेवाद्विभाव्यते। गोविन्दविष्णुमधुसूदनरूपं त्रयं संकर्षणात्।

कनकप्रभः केशवश्चतुश्चक्रधरः। श्यामो नारायणश्चतुःशङ्खधरः। मणिप्रभो माधवश्चतुर्गदाधरः। चन्द्राभो गोविन्दश्चतुःशार्ङ्गधरः। पद्मकिञ्जल्कसंनिभो विष्णुश्चतुर्हलधरः। अब्जाभो मधुसूदनश्चतुर्मुशलधरः। अग्निवर्णस्त्रिविक्रमश्चतुःखड्गधरः। बालसूर्याभो वामनश्चतुर्वज्रधरः। पुण्डरीकाभः श्रीधरश्चतुष्पट्टिशधरः। तडित्प्रभो हृषीकेशश्चतुर्मुद्गरधरः। सूर्याभः पद्मनाभः पञ्चायुधधरः। इन्द्रगोपनिभो दामोदरश्चतुष्पाशधरः।

विभवो नाम तत्तत्सजातीयरूपेणाऽऽविर्भावः। स दशधा—ते च मत्स्यादयोऽवतारविशेषाः। तत्र वेदापहारिदैत्यनिरसनद्वारा ब्रह्मणे प्रमाणमर्दत्वार्यो मत्स्यावतारः। देवानामजरामृतिहेत्वमृतोत्पादने मन्दराधारत्वेनावतीर्णः कूर्मावतारः। संसारसागरोन्मग्नजनोद्धर्तुकामः स्वपत्नीभूम्युद्धरणार्थमवतीर्णो वराहः। आश्रितसंरक्षणार्थं महासुरग्रहस्तम्भेऽवतीर्णो नृसिंहावतारः। त्रिविक्रमो भूत्वा स्वपादारविन्दोद्भवेन जलेन जगत्पापापहरणेन तद्रक्षणार्थमवतीर्णो वामनः। दुष्टक्षत्रियनिरसनार्थं परशुरामः। शरणागतरक्षणार्थो धर्मस्थापनार्थः श्रीरामः। प्रलम्बादिनिरसनार्थं बलभद्रः। मोक्षोपायदर्शनार्थं श्रीकृष्णः। अधर्मिष्ठान्निरस्य पूर्णधर्मोत्पादनार्थं कलिनिर्मोचनार्थं कल्क्यवतारः। एवमेकैकावतारेष्वनन्तप्रकाराः सन्ति। षट्त्रिंशद्भेदभिन्नाः पद्मनाभादयोऽपि। पुन-

त्रिविक्रमवामनश्रीधररूपं त्रयं प्रद्युम्नात्। हृषीकेशपद्मनाभदामोदररूपं त्रयमनिरुद्धादिति भावः। मणिप्रभः। इन्द्रनीलनिभः।

'इन्द्रनीलनिभश्यामं चतुर्हस्तैर्गदाधरम्'

इत्युक्तत्वात्। चतुःशार्ङ्गधर इति। चतुःपद्मधर इत्यपपाठः।

'चतुर्भुजधनुष्मन्तं चन्द्रमःसदृशद्युतिम्'

इत्युक्तत्वात्।

विभव इति। विभवश्च मुख्यगौणभेदाद्द्विविधः। तत्र मुख्यः साक्षादवतारः। गौणस्त्वावेशावतारः। आवेशश्च स्वरूपावेशः शक्त्यावेश इति द्विविधः। तत्र स्वरूपावेशः स्वेन रूपेण सहाऽऽवेशः। स च परशुरामादीनां चेतनानां शरीरेषु स्वासाधारणविग्रहेण सहाऽऽवेशः। शक्त्यावेशः कार्यकाले विधिशिवादिचेतनेषु शक्तिमात्रेण स्फुरणम्। अत्र गौणत्वमिच्छयाऽऽगतं न स्वरूपेण। यथा रामकृष्णादिमनुष्यत्वं मत्स्यादितिर्यक्त्वं चेच्छयाऽऽगतं तद्वत्। षट्त्रिंशद्भेदेति।

१ घ. ग. 'प्रभाभो°। २ ख. °तुः पद्मध°। ३ घ. °मुसल°। ४ क. °ष्पदध°। ५ घ. °श्चतुःपा°। ६ घ. °पाः। ब्र°। ७ ग. °निरासपूर्वकं ब्र°। ८ ग. °प्रदानार्थमवतीर्णो म°। ९ घ. °रः। अमृ°। १० घ. °रामरणे°। ११ घ. रः। सूमेरुद्द°। १२ ग. °तर°। १३ घ. त्पापह°। १४ घ. णार्थोऽव°। १५ ख. घ. 'क्षणध'। १६ घ. °नाथ श्री°। १७ ख. रामचन्द्रः°। १८ ग. घ. °ष्ठान् कलि°।

दधिभक्तहयग्रीवनरनारायणादयोऽपि । एवं मुख्यगौणपूर्णांशावेशाद्यवतारा बहुप्रकाराः। तेषूपास्यानुपास्यविभागो द्रष्टव्यः । अवताराणामिच्छैव हेतुर्नकर्म

नन्वहिर्बुध्न्यसंहितायामेकोनचत्वारिंशदुक्ताः । तथाहि—

'विभवाः पद्मनाभाद्यास्त्रिंशच्च नव चैव हि ।
पद्मनाभो ध्रुवोऽनन्तः शक्त्यात्मा मधुसूदनः ॥
विद्याधिदेवकपिलौ विश्वरूपो विहंगमः ।
क्रोधात्मा वडवावक्त्रो धर्मो वागीश्वरस्तथा ॥
एकाम्भोनिधिशायी च भगवान्कमठेश्वरः ।
वराहो नरसिंहश्च पीयूषहरणस्तथा ॥
श्रीपतिर्भगवान्देवः कान्तात्मामृतधारकः ।
राहुजित्कालनेमिघ्नः पारिजातहरस्तथा ॥
लोकनाथस्तु शान्तात्मा दत्तात्रेयो महाप्रभुः ।
न्यग्रोधशायी भगवानेकशृङ्गतनुस्तथा ॥
देवो वामनदेहस्तु सर्वव्यापी त्रिविक्रमः ।
नरो नारायणश्चैव हरिः कृष्णस्तथैव च ॥
ज्वलत्परशुधृग्रामो रामश्चान्यश्चतुर्गतिः ।
वेदविद्भगवान्कल्की पातालशयितः प्रभुः ॥
त्रिंशच्च नव चैवैते पद्मनाभादयो मताः ' इति ।

तत्कथमत्र षट्त्रिंशदित्युक्तमिति चेन्न । कपिलदत्तात्रेयपरशुरामाणामावेशावतारत्वात्तान्विहायात्र षट्त्रिंशदित्युक्तेः । दधिभक्तेति । तत्रामृतप्रदानार्थमङ्गीकृतो दधिभक्तावतारः । वेदप्रदानार्थो हयग्रीवावतारः। शिष्याचार्यरूपे स्थित्वा श्रीमन्त्रप्रकाशकृन्नरनारायणावतारः । तेष्विति । तदुक्तं तत्त्वत्रये ' तत्राप्राकृतविग्रहा अजहत्स्वभावविभवा दीपादुत्पन्नदीपवत्स्थिता मुख्यप्रादुर्भावाः सर्वे मुमुक्षूणामुपास्याः । विधिशिवपावकव्यासजामदग्न्यार्जुनवित्तेशादिरूपा गौणप्रादुर्भावाः सर्वेऽहंकारयुक्तजीवाधिष्ठितत्वान्मुमुक्षूणामनुपास्याः ' इति । अत्राऽऽदिशब्देन ककुत्स्थमुचुकुन्दसंग्रहः। विधिशिवादयश्च बुभुक्षूणामेवोपास्या इति बोध्यम् । इच्छैवेति । 'संभवाम्यात्ममायया' ( गी० ४। ६ ) इत्यत्राऽऽत्ममाययेत्यस्याऽऽत्मेच्छयेत्यर्थः । न कर्मेति ।

१ क. 'हयगुण' ।

प्रयोजनं तु दुष्कृतविनाशपूर्वकं साधुपरित्राणमेव ।

अन्तर्यामित्वं नाम स्वर्गनरकाद्यनुभवदशायामपि जीवात्मनः सुहृत्त्वेन योगिभिर्द्रष्टव्यतया हृदयप्रदेशावस्थितं रूपम् । जीवेन सार्कं विद्यमानोऽपि तद्गतदोषैरसंस्पृष्टो वर्तते ।

अर्चावतारो नाम देशकालविप्रकर्षरहित आश्रिताभिमतद्रव्यादिकं शरीरतया स्वीकृत्य तस्मिन्नप्राकृतशरीरविशिष्टः सन्नर्चकपराधीनस्नानभोजनासनशयनस्थितिः सर्वसहिष्णुः परिपूर्णो गृहग्रामनगरप्रदेशशैलादिषु वर्तमानो मूर्तिविशेषः । स च स्वयंव्यक्तदैवसैद्धमानुषभेदाच्चतुर्विधः । एवमुक्तासु

न च 'पतिव्रता धर्मपरा हता येन मम प्रिया ।
स तु प्रियाविरहितश्चिरकालं भविष्यति'

इत्येतादृशभृगुशापादिभिर्जात इति कथमुक्तमिति वाच्यम् । तत्र शापो व्याजमात्रमवतारस्त्विच्छाप्रयुक्त एवेत्याशयात् । प्रयोजनं त्विति । अत एवोक्तम्—

'परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगेयुगे' (गी० ४ । ८) इति ।

अन्तर्यामित्वमिति । 'य आत्मानमन्तरो यमयति' (बृ० ३ । ७ । ३) इतिश्रुतिरत्र प्रमाणम् । अस्य चान्तर्यामिणः स्थितिर्द्विधा—तत्रैका स्वर्गनरकप्रवेशादिसर्वावस्थास्वपि सकलचेतनानां सहायभूतस्य तांस्त्यक्तुमसमर्थस्य स्थितिः । अपरा च शुभाश्रयेण विग्रहेण सहितस्य तेषां ध्येयत्वार्थं तान्रक्षितुं च बन्धुभूतस्य हृदयकमले स्थितिः ।

अर्चावतारः । प्रतिमावतारः । देशेति । रामकृष्णाद्यवतारेष्वयोध्यामथुरादिदेशनियम इवार्चावतारेषु देशनियमो नास्तीत्यर्थः । एवं कालनियमोऽपि । आश्रिताभिमतद्रव्यादिकम् । सुवर्णरजतशिलादिकम् । अर्चावतारस्यापि षड्गुणाश्रयत्वम् । तदुक्तम्—

'सर्वातिशयषाड्गुण्यं संस्थितं मन्त्रबिम्बयोः ।
मन्त्रे वाच्यात्मना नित्यं बिम्बे तु कृपया स्थितम्' इति ।

बिम्बं प्रतिमा । स चेति । देवालयादिष्वयं विद्यमानो मूर्तिविशेषः क्वचित्स्वयंव्यक्तो भवति । क्वचिद्देवैः स्थापितः । क्वचित्सिद्धैः । क्वचिन्मनुष्यैः । तत्राऽऽद्यत्रय-

१ क. °ष्टो द्रष्टव्य.° । २ घ. °हिताश्रि° । ३ घ. °प्रशस्तदे° । ग. °प्रशस्त दे° ।

पश्चादवस्थास्वपि[1] श्रीविशिष्ट एव भगवान्वर्तत इति श्रुत्या प्रमाणसिद्धोऽर्थः[3] । तेनैकायनोक्तानिःश्रीकवादो निरस्तः । एवमीश्वरो निरूपितः ॥

इति श्रीवाधूलकुलतिलकश्रीमन्महाचार्यस्य प्रथमदासेन श्रीनिवासदासेन विरचितायां यतीन्द्रमतदीपिकायामीश्वरनिरूपणं नाम नवमोऽवतारः ॥ ९ ॥

---

मैतिह्यादवगन्तव्यम् । चतुर्थस्तु प्रसिद्ध एव । आर्यस्तूक्तान्तर्भूत एव । श्रीविशिष्ट एवेति । अत एवोक्तम्—

' नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी ।
यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम ॥
देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी ।
विष्णोरेवानुरूपां वै करोत्येषाऽऽत्मनस्तनुम् ' इति ।

अत्रोपासकस्य प्रथमतोऽर्चावतारस्योपासनेऽधिकारः । ततो विभवस्य । ततो व्यूहस्य । ततः परस्य । ततोऽन्तर्यामिणः । तदुक्तम्—

' उपासकानुरोधेन भजते मूर्तिपञ्चकम् ।
तदर्चाविभवव्यूहसूक्ष्मान्तर्यामिसञ्ज्ञकम् ॥
यदाश्रित्यैव चिद्वर्गस्तत्तज्ज्ञेयं प्रपद्यते ।
पूर्वपूर्वोदितोपास्तिविशेषक्षीणकल्मषः ॥
उत्तरोत्तरमूर्तीनामुपास्त्यधिकृतो भवेत् ' इति ।
' वासुदेवः स्वभक्तेषु वात्सल्यात्तत्तदीहितम् ।
अधिकार्यानुगुण्येन प्रयच्छति फलं बहु ॥
तदर्थं लीलया स्वीयाः पञ्च मूर्तीः करोति वै ।
प्रतिमादिकमर्चा स्यादवतारास्तु वैभवाः ॥
संकर्षणो वासुदेवः प्रद्युम्नश्चानिरुद्धकः ।
व्यूहश्चतुर्विधो ज्ञेयः सूक्ष्मं संपूर्णषड्गुणम् ॥
तदेव वासुदेवाख्यं परं ब्रह्म निगद्यते ।
अन्तर्यामी जीवसंस्थो जीवप्रेरक ईरितः ॥
य आत्मनीतिवेदान्तवाक्यजालैर्निरूपितः ।
अर्चोपासनया क्षिप्ते कल्मषेऽधिकृतो भवेत् ॥

---

१ ख. 'षिवि' । २ ख. 'णानिषिद्धार्थ.' । ३ ग. 'र्थः । एतेनै' ।

## अथ दशमोऽवतारः ।

एवं द्रव्यनिरूपणानन्तरं क्रमप्राप्तमद्रव्यं निरूप्यते—संयोगरहितमद्रव्यम् । तदद्रव्यं च सत्त्वरजस्तमांसि शब्दस्पर्शरूपरसगन्धाः संयोगः शक्तिरिति दशप्रकारमेव । तत्र प्रकाशसुखलाघवादिनिदानमतीन्द्रियं शक्त्याद्यतिरिक्तमद्रव्यं सत्त्वम् । तद्द्विविधम्—शुद्धसत्त्वं मिश्रसत्त्वं चेति । रजस्तमःशून्यद्रव्यवर्ति सत्त्वं शुद्धसत्त्वम् । तन्नित्यविभूतावुपचारोत्तमवर्तकेश्वरे च । रजस्तमः-

विभवोपासने, पश्चाद्व्यूहोपास्ती ततः परम् ।
सूक्ष्मे, तदनु शक्तः स्यादन्तर्यामिणमीक्षितुम् ' इति च ॥
इति श्रीयतीन्द्रमतदीपिकाप्रकाशे नवमोऽवतारः ॥

अथ दशमोऽवतारः ।

संयोगरहितमिति । द्रव्ययोरेव संयोग इति नियमात् । सत्त्वेति । ननु सत्त्वरजस्तमसां द्रव्याभेदेन द्रव्यत्वमेवेति चेन्न । ' रचनानुपपत्तेश्च ' ( ब्र० सू० २ । २ । १ ) इतिसूत्रस्थभाष्यविरोधात् । तत्र हि चकारादन्वयस्यानैकान्त्यं समुच्चिनोतीत्युपक्रम्य सत्त्वादयो द्रव्यधर्मा न तु द्रव्यस्वरूपम् । सत्त्वादयो हि पृथिव्यादिद्रव्यगतलघुत्वप्रकाशादिहेतुभूतास्तत्स्वभावविशेषा एव न तु मृद्धिरण्यादिवद्द्रव्यतया कार्यान्विता उपलभ्यन्ते । गुणा इत्येव च सत्त्वादीनां प्रसिद्धिरित्युक्तम् । सत्त्वादीनां द्रव्यत्वस्याप्रामाणिकतया गुणशब्दस्यास्वारस्यमयुक्तमिति श्रुतप्रकाशिकायामुक्तम् । वेदान्तदीपेऽपि चकारात्सत्त्वादीनां द्रव्यगुणत्वेन शौक्ल्यादेरिवोपादानकारणत्वासंभवं समुच्चिनोति । सत्त्वादयो हि कार्यगतलाघवप्रकाशादिहेतुभूताः कारणभूतपृथिव्यादिगतास्तत्तत्स्वभावविशेषा इत्युक्तम् । सत्त्वरजस्तमसां शब्दादिपञ्चानां च भूताद्यनुपादानानां गुणत्वम् । तदुपादानानां तन्मात्रत्वाद्द्रव्यत्वमिति तु कृष्णावधूतपण्डितैरुक्तम् । प्रकाशसुखेति । अनेन रजस्तमसोर्व्यावृत्तिः । अतीन्द्रियमित्यनेन शब्दादीनां व्यावृत्तिः । शक्त्याद्यतिरिक्तमित्यनेन शक्त्यादिव्यावृत्तिः । प्रकाशश्च वस्तुयाथात्म्यावबोधः । आदिपदेन ज्ञानसुखसङ्गसंग्रहः । तदुक्तं गीताभाष्ये—( १४।६ ) ज्ञानसुखजननं सत्त्वं

१ ग. 'दश' । २ क. शून्यं द्र' । ख. 'शून्यवर्ति' । ३ ग. 'व्यवृत्तिस°' । ४ क. 'रात्तत्तत्र°' ।

सहवर्तिसत्त्वं मिश्रसत्त्वम्। तत्त्रिगुणे तत्संबन्धिनि जीवे चोपचारादिति ज्ञेयम्।

लोभप्रवृत्त्यादिनिदानमतीन्द्रियं शक्त्याद्यतिरिक्तमद्रव्यं रजः।

प्रमादमोहादिनिमित्तमतीन्द्रियं शक्त्याद्यतिरिक्तमद्रव्यं तमः। त्रीण्यप्येतानि यावत्प्रकृतिव्याप्तानि प्रकृतिवश्यपुरुषसंबद्धान्यनित्यानि। नित्यसंतानानि प्रलयदशायां समानि सृष्ट्यादौ विषमाणि सृष्टिस्थितिसंहारोपयुक्तानि ईश्वरसंकल्पादिसहकारिभेदात्परस्पराभिभवोद्भवकराणीत्येतानि साधारणानि। सत्त्वगुणस्तु सम्यग्ज्ञानरूपसुखादिहेतुर्मोक्षप्रदश्च। रजोगुणस्तु रागाद्यात्मकः कर्मसङ्गदुःखादिहेतुः स्वर्गाद्यामुष्मिकप्रदः। तमोगुणस्त्वज्ञानरूप आलस्यादिहेतुर्नरकप्रदश्च। अतः सत्त्वादयो गुणा न द्रव्यरूपाः।

अस्मदादिश्रोत्रग्राह्यः पञ्चभूतवर्ती शब्दः। स द्विविधः—वर्णात्मकोऽव-

---

पुनरपि तयोः सङ्गजननं चेति। मिश्रसत्त्वमिति। इदमेवाशुद्धसत्त्वमिति व्यवह्रियते।

लोभप्रवृत्त्यादीति। लोभः स्वकीयद्रव्यस्यात्यागशीलता। प्रवृत्तिस्तु प्रयोजनमनुद्दिश्यापि चलस्वभावता। आदिपदेनाऽऽरम्भाशमस्पृहासंग्रहः। आरम्भश्च फलसाधनभूतकर्मारम्भः। इन्द्रियानुपरतिरशमः। विषयेच्छा स्पृहा।

प्रमादमोहादीति। अकार्यप्रवृत्तिफलमनवधाने प्रमादः। विपरीतज्ञानं मोहः। आदिपदेनाप्रकाशाप्रवृत्तिसंग्रहः। ज्ञानानुदयोऽप्रकाशः। अप्रवृत्तिश्च स्तब्धता।

पञ्चभूतवर्तीति। मेघो गर्जति शङ्खो नदति भेरी ध्वनतीत्यादिव्यवहारदर्शनात्। 'नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि' (तै० १। १। १) इतिश्रुतौ च वायोरेव वेदात्मना परिणतिरुपलभ्यते। तत्तु वायोः शब्दाधारत्वमन्तरेण न संजाघटीति। 'तस्य ह वा एतस्य महतो भूतस्य निःश्वसितमेतदृग्वेदः' (बृ० २। ४। १०) इत्यादिश्रुतिरप्यत्र प्रमाणम्। विष्णुपुराणे च (२। १४। ३२)—

वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः।
अभेदव्यापिनो वायोस्तथाऽसौ परमात्मनः॥

इत्युक्तम्। एवं नाभिदेशादेव निर्गतस्य वायोस्तात्वादिस्थानसंबन्धेन तत्तच्छब्दपरिणतिहेतुत्वं प्रसिद्धमेव। अत्रेदं बोध्यम्—लीलाविभूताविव नित्यविभूतावपि

---

१ ग. 'इवृत्तिश'। २ क. °न्धिजी°। ३ क. 'मानानि°। ४ ग. °सृष्टिदशाया वि°। ५ क. °राण्येता°। ६ ख. °सत्यज्ञान'। घ. °सम्यक्त्वज्ञान'। ७ घ. °सुखहे°। ८ ग. 'त्मककर्म°। ९ क. सङ्गिदुःखहे'। ख. 'सङ्गदु.°। १० ग. 'स्वर्गनरकाद्या'।

र्णात्मकश्चेति । अकचटतपयादिविशिष्टपञ्चाशदक्षरात्मको वर्णात्मकः । देवमनुष्यादीनां ताल्वादिव्यङ्ग्यः । भेर्यादिजन्योऽवर्णात्मकः । एवंभूतः शब्दः श्रोत्रेन्द्रियेण गृह्यते । श्रोत्रेन्द्रियगमनाद्व्यञ्जकवाय्वागमनाद्वा शब्दग्रहः । ननु श्रुत्या शब्दस्य द्रव्यत्वं प्रतीयते । अद्रव्यत्वं कथमिति चेन्न । अकारादेः प्रणवोत्पादकत्वं वाच्यद्वारा संभवतीति परिहारादद्रव्यत्वमुपपद्यते । इति शब्दः ।

---

शब्दादयो वर्तन्त एव । ते च सर्वोत्कृष्टाः सर्वातिशायिनश्च । यथा कस्तूरीचम्पकप्रभृतिषु गन्धसाम्ये सत्यपि सौरभविशेषस्तत्रतत्रोपलभ्यते, तथा लीलाविभूतौ नित्यविभूतौ च शब्दादिसद्भावेऽपि प्रमाणसिद्धं वैषम्यमनतिलङ्घनीयमेव । न हि वीणावेणुप्रभृतीनामेकरूप्येण स्वरनियम इति ।

पञ्चाशदिति । स्वराः षोडश । कादयः स्पर्शाः पञ्चविंशतिः, यरलवशषसह इत्येतेऽष्टौ । क्षवर्णश्चैकः । तस्य संयुक्तत्वेऽपि मातृकापाठे पृथग्गणनात् । ळकारस्तु न पृथग्गणितः । मातृकापाठे ळळयोरभेदात् । ननु दूरस्थशब्दस्य कथं श्रोत्रेन्द्रियसंनिकर्ष इति चेत्तत्राऽऽह—श्रोत्रेन्द्रियेति । तदुक्तं वरदनारायणभट्टारकैः—

'दूरे शब्दः समीपे च प्राच्यां चेत्यादिदर्शनात् ।
गत्वा श्रोत्रेन्द्रियं तत्र ततः शब्दग्रहक्षमम्' इति ।

व्यञ्जकेति । शब्दाधारभेर्याद्यवयवागमेन शब्दाधारवाय्वागमनेन वा दूरस्थशब्दग्रह इत्यपि केचित् । ननु श्रुत्येति । भूरित्येव ऋग्वेदादजायत भुव इति यजुर्वेदात्स्वरिति सामवेदात्तानि शुक्राण्यभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्त, अकार उकारो मकार इति तानेकधा समभरत्तदेतदोमिति (ऐ०ब्रा०अ०२९ख०७) इति हि श्रुतिः । स्मृतिरपि—

'अकारं चाप्युकारं च मकारं च प्रजापतिः ।
वेदत्रयान्निरदुहद्भूर्भुवः स्वरितीति च' इति ।

अत्राकारादिवर्णानां प्रणवोपादानकारणत्वप्रतिपादनेन द्रव्यत्वमन्तरेणोपादानकारणत्वासंभवेन द्रव्यत्वं सिध्यति । यस्य वेदाः शरीरमिति श्रुतौ च शब्दात्मकवेदस्य शरीरत्वप्रतिपादनेन शरीरत्वस्य च द्रव्यत्वव्याप्यत्वेन शब्दस्य द्रव्यत्वं सिध्यतीत्याशयः । प्रयोगश्च—शब्दो द्रव्यम्, साक्षादिन्द्रियसंबन्धेन गृह्यमाणत्वाद्घटवदिति । वाच्यद्वारेति । तथा च वाच्यस्योपादानकारणत्वेन द्रव्यत्वेऽपि वाचकस्य शब्दस्य द्रव्यत्वे मानाभावः । 'यस्य वेदाः शरीरम्' (बृ० ३ । ७ । ३) इति तु देवताविशेषविषयत्वेनोपपद्यते । साक्षादिन्द्रियसंबन्धेन गृह्यमाणत्वमिति हेतुस्तु स्वरूपासिद्धः । शब्दस्याऽऽश्रयद्वारैवेन्द्रियसंनिकर्षात् । न च

---

१ घ. °ते । ननु° । २ घ. °वोपपाद° ।

अस्मदादिस्पर्शनेन्द्रियग्राह्यविजातीयव्यावृत्तमद्रव्यं स्पर्शः। स च त्रिविधः—शीतोष्णानुभयात्मकभेदात्। अप्सु शीतस्पर्शः। तेजस्युष्णस्पर्शः। क्षितिपवनयोरनुष्णाशीतस्पर्शः। स च पुनर्द्विविधः—पाकजोऽपाकजश्चेति। पृथिव्यां पूर्वः। इतरेषु त्रिष्वितरः। तत्रामृतगरलतूलोपलगोब्राह्मणचाण्डालादिस्पर्शविशेषो अपाकजभेदाः। इति स्पर्शः।

अस्मदादिचक्षुरिन्द्रियैकग्राह्यविजातीयव्यावृत्तमद्रव्यं रूपम्। तच्चतुर्विधम्—श्वेतरक्तपीतकृष्णभेदात्। तत्र सलिलकलधौतशङ्खशुक्तिशशाङ्कादीनां रूपविशेषाः श्वेतभेदाः। हुतवहजपादाडिमबन्धुजीवविद्रुमपद्मरागादीनां तु रूपविशेषा रक्तभेदाः। काञ्चनहरितालहरिद्रादीनां रूपविशेषाः पीतभेदाः। मरकतमधुकरजलधरतिमिरतमालदूर्वादीनां कृष्णभेदाः। पीतमपि रक्तावान्तरभेदं केचिदिच्छन्ति। श्रुत्यनुसारात्। प्रकारान्तरेण रूपं द्विविधम्—

श्रोत्रेन्द्रियस्याऽऽकाशस्वरूपत्वात्तेन साक्षादेव शब्दस्य संनिकर्ष इति वाच्यम्। श्रोत्रेन्द्रियस्याऽऽकाशत्वायोगात्।

अस्मदादीति। अस्मदादिस्पर्शनेन्द्रियग्राह्यो यः स्पर्शस्तद्विजातीयाः शब्दादयस्तद्व्यावृत्तं तद्भिन्नमित्यर्थः। विजातीयव्यावृत्तपदानुपादानेऽनुद्भूतस्पर्शेऽव्याप्तिः स्यात्। तस्यास्मदादिस्पर्शनेन्द्रियग्राह्यत्वाभावात्। घटादिव्यावृत्तयेऽद्रव्यमिति। एवमग्रेऽप्यूह्यम्। तेजस्युष्ण इति।

'सुतं पतन्तं प्रसमीक्ष्य पावके न बोधयामास पतिं पतिव्रता।
पतिव्रताशापभयेन पीडितो हुताशनश्चन्दनबिन्दुशीतलः'

इत्यस्य त्वयमाशयः—हुताशनस्य न शीतलत्वं जायते। अपि तु पतिव्रतासंकल्पविशेषेण तस्य दाहकत्वमेवोपरुध्यत इति। अनुष्णाशीत इति। अनुष्णाशीतोऽपि स्पर्श एव। न तु शीतोष्णविरहमात्रम्। आकाशादावपि तथोपलम्भप्रसङ्गात्। वायुपृथिव्योः स्पर्शवत्त्वस्य श्रुत्यादिसिद्धत्वाच्च। न च स्पर्शसामान्यं तदिति वाच्यम्। निर्विशेषं न सामान्यमिति न्यायात्। चाण्डालादीति। आदिना कपिकच्छूसंग्रहः। गोब्राह्मणचाण्डालादिषु स्पर्शभेदस्तु तत्तत्स्पर्शाधीनशुद्ध्यशुद्धिभेदेन बोध्यः। मृदुत्वकठिनत्वादयोऽपि स्पर्शविशेषा एव। स्पर्शनेनैव तदुपलब्धेः। चक्षुषा तु न तदुपलब्धिः। किंतु तत्र मृदुत्वादिव्याप्यरूपविशेषग्रहणेन तदनुमानमेव। केचित्तु मृदुत्वादयः संयोगविशेषा एवेत्याहुः।

चक्षुरिन्द्रियैकग्राह्येति। चक्षुरिन्द्रियमात्रग्राह्यमित्यर्थः। श्रुत्यनुसारादिति। 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य' (छां० ६।४।१)

१ ग. 'मात्रविजातीयव्यावृत्तोऽद्रव्य°। घ ग्राह्यमद्रव्य'। २ घ. 'षाः। इति'। ३ ग. 'दाः। अस्म°। ४ ग. घ. 'तुर्धा°। ५ क. ख. घ. ° णद्विविधा'।

भास्वराभास्वरभेदात्। तेजोगतं भास्वरम्। क्षितिसलिलगतं चाभास्वरम्। एवं चत्वार्येव रूपाणि। तेन चित्रं नाम पञ्चमं रूपमिति मतनिरासः। अत एव चित्रगन्धस्पर्शरसानामपि निरासः। इति रूपम्।

अस्मदादिजिह्वैकग्राह्यविजातीयेतरो रसः। स षोढा—मधुराम्ललवणकटुककषायतिक्तभेदात्। तत्रेक्षुक्षीरगुडादिरसा मधुरभेदाः। चूतचिञ्चामलकादिरसा आम्लाः। सैन्धवोपरविकारा लवणभेदाः। किंपाकनिम्बादिरसाः कटुभेदाः। हरीतकीविभीतकचूताङ्कुरादिरसाः कषायभेदाः। शुण्ठीमरीचिसर्षपादिरसास्तिक्तभेदाः। इति रसः।

अस्मदादिघ्राणग्राह्यविजातीयेतरोऽद्रव्यविशेषो गन्धः। स च द्विविधः—सुरभिरसुरभिश्चेति। पाटीरमृगमदकुसुमचम्पकादिगन्धाः सुरभिभेदाः। अयं च गन्धः पृथिव्येकवर्ती पाकभेदाद्भिन्नः। पवनसलिलादिषु गन्धोपलम्भः पार्थिवसंसर्गादयो दहतीतिवदौपचारिकः। पञ्चीकरणप्रक्रियया सर्वभूतेषु सर्वभूतगुणानां विद्यमानत्वेऽपि प्राधान्याभिप्रायेणोक्तमिति न विरोधः। पाकाद्गुणान्तरोत्पत्तिः स्वाश्रयनाशाभावादेवोपपत्तेः पीलुपाकवादिमतनिरासः। इति गन्धः।

---

इतिश्रुतौ त्रयाणामेव रूपाणां प्रतिपादनादिति भावः। तेजोगतमिति। तेजसि रूपं रक्तभास्वरम्। सलिले तु शुक्लभास्वरम्। पृथिव्यां बहुविधमभास्वरम्। यद्यपि मन्त्रशास्त्रे पीता भूमिः श्वेतमम्भो वह्निपवनौ रक्तधूम्रौ द्यौर्नीलेति पञ्चानामपि भूतानां रूपवत्त्वं दृश्यते तथाऽपि तत्केवलं ध्यानार्थमेव। यथा तत्र मन्त्रवर्णानामपि रूपं ध्यानार्थं वर्णितं तद्वत्। अन्यथा 'यदग्ने' इत्युक्तश्रुतिविरोधः। अनुभवविरोधश्च। चतुर्विधस्यापि रूपस्य पृथिव्यामुपलम्भात्। श्रुतौ पृथिव्याः कृष्णरूपोक्तिस्तु न रूपान्तरविरहपरा। कलुषजलादौ वर्णभेदस्तु पृथिवीसंसर्गविशेषादेव। चित्रमिति। यत्तु नैयायिकाश्चित्रमिति किमपि रूपान्तरमस्ति। अन्यथा श्वेतपीताद्यनेकतन्त्वारब्धपटस्य नीरूपत्वेनाप्रत्यक्षप्रसङ्गादित्याहुः। तन्न। अवयवातिरिक्तस्यावयविनोऽभावात्। अवयवेषु च श्वेतादेरेकैकस्यैवोपलम्भात्।

सुरभिभेदा इति। एतदुत्तरं पूतिविस्रादिगन्धा असुरभिभेदा इति पाठः। पीलुपाकेति। पीलवः परमाणवस्तेष्वेव पाको न त्ववयविनीति वैशेषिकाः। अवय-

---

१ क ख. °सः। अस्म°। २ घ. चित्ररसगन्धादिस्पर्शानामपि। ३ ग. °दिरसनेन्द्रियग्रा°। ४ क. कारभेदा लव°। ग. °कारादिरसा लव°। ५ ग. °ण्ठीमिरिची स°। ६ ग. °दाः। अस्म। ७ ख. °घ्राणेन्द्रियग्रा°। ८ घ. ग. °स द्वि°। ९ घ °भेदाभिन्नः°। १० ग. घ. °वसंसर्गाद°। ११ ग. घ. °वैगु°। १२ ख. °वोत्पत्ते.°। १३ ग. °पाकादिम°। घ. °पाकम°।

